त्वमिन्द्रियाग्राह्यत्वं दुर्विज्ञेयत्वं वा । अत्र च प्रमाणान्तरं, 'नित्यं विभुं सर्वगतं सुसूक्ष्मम्' इत्यादिश्रुतिः । **सद्भावरूपं,** 'सदेव सौम्य' इत्यादिश्रुतेः । **विभुत्वं,** सर्वगतत्वम् । तच्च देशपरिच्छेदशून्यत्वं स्वातन्त्र्यं वा । तत्र प्रमाणान्तरं, 'महान्तं विभुमात्मानं मत्वा धीरो न शोचति' इति श्रुतिः । **अद्वितीयत्वं,** स्वसमानसत्ताकद्वितीयरहितत्वम् । तच्च स्वसमानसत्ताकभिन्नद्वितीयकत्वम् । स्वसमानसत्ताकप्रतियोगिसामान्यभेदरहितत्वमिति सजातीयविजातीयस्वगतभेदशून्यत्वमिति वा । **आनन्दत्वं,** अपरिच्छिन्नसुखस्वरूपत्वमिति । नन्वत्रार्थे सन्ति बहवो निबन्धाः किमनेन इत्यत आह—**संक्षेपेणेति** ।

**नन्विदङ्कारास्पदेभ्योऽनात्मभ्योविवेकेनाहङ्कारास्पदमात्मानं सर्वो लोकोऽहमस्मीति प्रत्येति दुःखं चानुभवति । तेन ज्ञातज्ञापकत्वान्निष्प्रयोजनकत्वाच्च आत्मतत्त्वप्रतिपादनं व्यर्थमिति चेत्, न, चिद्भास्यत्वेन लक्षणेन इदङ्कारास्पदानामपि देहेन्द्रियमनसां[1] प्रतिभासतोऽहङ्कारास्पदत्वेन तदविवेकात्, तेन विशुद्धेऽप्यात्मनि[2] दुःखित्वाद्यभिमानात् शास्त्रीयेणैवं[3] ब्रह्मैक्यज्ञानेन समूलस्य तस्य निवृत्तेः । तस्मादज्ञातज्ञापकत्वात्सप्रयोजनकत्वाच्चात्मतत्त्वप्रतिपादनं न व्यर्थम् ।**

नन्वनात्मभ्यो घटपटादिभ्यो भिन्नत्वेनात्मनि ज्ञातेऽपि दुःखानुभवदर्शनान्नात्मज्ञानं दुःखनिवर्तकं ज्ञातज्ञापकत्वाच्च शास्त्रं न प्रमाणमित्याशङ्कते—**नन्विति** । **अथ इदङ्कारास्पदत्वं नाम,** इदमिति प्रतीतिविषयत्वम् । तच्चात्मन्यपि सत्त्वात् 'अयमात्मा ब्रह्म,' 'अनेन जीवेन' इत्यादिना इदंत्वेनात्मनो बोधनात्तथा चानुपपन्नतरोऽयमनुभवः, नहि कश्चिदनात्मभ्यो भेदेनात्मानमनुभवति इत्यत आह—**अनात्मभ्य इति** । घटपटादिभ्य इत्यर्थः । एवं घटपटाद्यन्यतमत्वं जडत्वं वा इदंत्वं न पूर्वोक्तमत एवोपपन्नतमोक्तानुभव इति भावः । कियद्भ्यो भेदेन, आत्मनि गृहीतेऽपि अनात्मभ्यो देहेन्द्रियादिभ्यः । भेदेनाग्रहणात् अनात्मसामान्येभ्यो भेदाग्रहात् । तादृशं ज्ञानं जातमपि न प्रयोजनक्षममिति परिहरति—**नेति** । वस्तुतः इदङ्कारास्पदानां देहेन्द्रियमनसां चिद्भास्यत्वलक्षणरूपेणासाधारणधर्मेणानात्मनामपि अहङ्कारास्पदत्वेनाहमितिप्रत्ययावलम्बनत्वेनात्मत्वेन प्रतिभासतो ज्ञातत्वादिति भावः । **तदविवेकादिति** । देहेन्द्रियमनोऽहङ्कारादिभ्यो भेदेनाग्रहादित्यर्थः । एवं च तद-

१. खपुस्तके देहेन्द्रियप्राणमनसामिति । २. खगयोस्ते च शुद्धेऽप्यात्मनीति । ३. कपुस्तके शास्त्राचार्येण च ब्रह्मात्मैकाज्ञानेन इत्यशुद्धः पाठो विद्यते । ४. क१ पुस्तके नकारोऽयं नास्ति तथापि स आवश्यक इति खगपुस्तकयोरुद्धृतः ।

विवेकादित्यन्तेनाशङ्कितानामात्मभेदग्रहः परास्तः । चिद्भास्यत्वमनात्मत्वसाधने हेतुः । अनात्मत्वेनाज्ञातत्वम्, आत्मत्वेन ज्ञातत्वं विवेकाग्रहे हेतुरिति मन्तव्यम् । एवं च देहेन्द्रियादय अनात्मानश्चिद्भास्यत्वात् । देहादय आत्मनो न गृहीतभेदकाः, अनात्मत्वेनाज्ञातत्वादात्मत्वेन ज्ञातत्वाद्वेति प्रयोगः । **चिद्भास्यत्वं** च, चैतन्यप्रकाश्यत्वम् । तत्र च प्रमाणं, 'तस्य भासा सर्वमिदं विभाति' इत्याद्या श्रुतिः । आशङ्कितदुःखानुभवमपनुदति[1]—**तेनेति** । तेन, अविवेकेन, अगृहीतभेदेनेति यावत् । **अभिमानादिति** । आत्मनि दुःखभ्रममात्रं न तु दुःखमिति भावः । यदीदं ज्ञानं न प्रयोजनक्षमं तर्हि कीदृशमात्मतत्त्वज्ञानं प्रयोजनक्षमं तत्राह—**शास्त्रीयेणेति** । शास्त्रं च ।

'जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते ।
तद्ब्रह्माहमस्मीति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥' इत्यादि ।

एवं च शुद्धजीवब्रह्मणोरभेदावगाहिज्ञानं शास्त्रजन्यं तच्च बन्धनिवर्तकमिति फलितमुपसंहरति—**तस्मादिति** ।

**तस्य चात्मतत्त्वस्य 'तत्त्वमसि' (छा. ६।८।७), 'अहं ब्रह्मास्मि' (बृ. आ. १।४।१०), इत्यादिवेदान्तमहावाक्यमेव प्रमापकम् । वाक्यं च पदार्थज्ञानद्वारेणैव ज्ञापकमिति तत्त्वम्पदार्थयोः प्रकृतवाक्यानुकूलयोरन्यतोऽसिद्धत्वात् तावपि शास्त्रेणैव प्रमातव्यौ यूपाहवनीयपदार्थवत् । ततश्च 'यतो वा इमानि भूतानि जायन्ते येन वा जातानि जीवन्ति' (तै. ३।१।१) इत्याद्याः सृष्ट्यादिश्रुतयस्तत्पदवाच्यार्थस्य समर्पिकाः, 'सत्यं ज्ञानमनन्तम्' (सैव. २।१) इत्याद्यास्तु लक्ष्यार्थस्य । एवं जाग्रत्स्वप्नसुषुप्त्यादिश्रुतयः 'तद्यथा महामत्स्य उभे कूले अनुसञ्चरति'[2](बृ.आ.४।३।१८)इत्याद्यास्त्वम्पदवाच्यार्थस्य समर्पिकाः, 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः,' (बृ. आ.४।३।७) 'न दृष्टेर्द्रष्टारं पश्येः' (सैव. ३।४।२) इत्याद्यास्तु लक्ष्यार्थस्य । तेन प्रथममवान्तरवाक्येभ्योऽनुभूतयोः शुद्धजीवब्रह्मणोस्तत्त्वमस्यादिवाक्ये मुख्यार्थान्वयानुपपत्तेर्लक्षणया स्मरणोपपत्तिः । सुषुप्तौ निर्विकल्पकसाक्षिचैतन्यानुभवाङ्गीकाराच्च अद्वितीयब्रह्मजिज्ञापयिषया प्रवृत्तानां सत्यज्ञानादिपदानामुपाधिविशिष्टचैतन्ये शक्तत्वेऽपि चैतन्यमात्रे तात्पर्येण तत्रैव तदंशे एव[3] संस्कारोद्बोधाच्च । इच्छन्ति हि आकाशादिपदादपि निर्विकल्पकं स्मरणं[4] तात्पर्याधीनत्वाच्छब्दवृत्तेः । एतेन प्रमितिप्रमात्रोर्महावाक्यार्थबोधे भानमपास्तम् । असम्प्रज्ञात-**

१. क१ पुस्तके अनुवदतीति पाठः स न युक्त इति मन्ये । २. कपुस्तके तद्यथा महामत्स्य इत्याद्या इति पाठः । ३. तदंशे एव इत्येतत्पदद्वयं कपुस्तके नास्ति । ४. तस्मिन्नेव स्मरणमितिपदं नास्ति ।

**समाधेः श्रुतिस्मृतिसिद्धत्वाच्च[1] । पारोक्ष्यसद्वितीयत्वाभ्यां च न तत्त्वम्पदार्थमात्रानुभवादेव कृतकृत्यता । वाच्यार्थस्य च भेदावभासान्न पौनरुक्त्यम् । लक्ष्यार्थस्य चैकत्वादखण्डार्थता । पदजन्यस्य च स्मरणस्य निर्विकल्पकवाक्यार्थानुकूलस्य निर्विकल्पकत्वमनुभववदेवाविरुद्धम्[2] । सविकल्पकवाक्यार्थबोधे च सविकल्पकपदार्थोपस्थितिरङ्गम् । प्रकृते च निर्विकल्पको वाक्यार्थबोधस्तस्यैव प्रमात्वेनाज्ञाननिवर्तनसामर्थ्यात्[3] । अतो न लक्ष्यतावच्छेकमन्तरेण लक्षणानुपपत्तिः । प्रकृतवाक्यार्थानुकूलपदार्थोपस्थितिरेव शक्तिलक्षणासाध्यत्वात् ।**

शास्त्रमेवाह—**तस्य चेति । आत्मतत्त्वस्य,** जीवब्रह्मणोरभेदस्य । **एवकारेण** लौकिकप्रमाणव्यावृत्तिः कृता । नन्वेवमपि पदार्थबोधकाभावान्न वाक्यार्थबोध इत्याशङ्क्याह—**वाक्यं चेत्यादिना । असिद्धत्वात्,** अज्ञातत्वात् । नन्विदमदृष्टचरमेव कल्प्यते, न इत्याह—**यूपेति** । 'यूपे पशून्बध्नाति' इति श्रूयते, तत्रैव 'यूपं तक्षति,' 'यूपमष्टास्रिं करोति' इति च तेनाष्टास्रितक्षणविशिष्टखदिरादिकाष्ठविशेषो यूपपदवाच्य इति यथा वेदाच्छक्तिग्रहस्तथा तत्त्वम्पदार्थयोरपि वेदाच्छक्तिग्रह इत्यर्थः । **आहवनीयेति** । यद्यपि 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्याद्युत्पत्तिविधिषु आहवनीयत्वादिरूपेणाग्नेराधानकर्मत्वं न श्रूयते तथापि तस्य स्वरूपेणाग्नित्वेन वा उत्पाद्यप्राप्यविकार्यकर्मत्वानुपपत्तेः आहवनीयादिशब्दार्थाज्ञानाच्चाधानकर्मविधिप्रवृत्तितः प्रागपूर्वसाधनत्वस्य ज्ञातुमशक्यत्वात्तेन रूपेण व्रीह्यादिवत्संस्कार्यत्वानुपपत्तेः केन रूपेण कीदृशं कर्मेत्याद्यपेक्षायां 'नक्तं गार्हपत्यमादधाति दिवा आहवनीयं भूरिति गार्हपत्यमादधाति भुव इत्याहवनीयम्' इत्यादिगुणवाक्येषु[4] गार्हपत्याहवनीयरूपेणाग्न्याधानकर्मत्वावगमात्तद्रूपस्य चाधानात्प्रागसिद्धत्वात्तेन रूपेणोत्पाद्यकर्मत्वं प्रतीयते । आधानेनाग्नी गार्हपत्याहवनीयौ कुर्यादिति, खदिरादिकाष्ठं तक्षणादिभिः यूपं कुर्यादितिवत् । ततश्चाधानजन्योऽग्निगतोऽतिशय एवाहवनीयादिपदवाच्यो भवतीति । आदिपदग्राह्यं तु स्वर्गाद्यपि वेदबोधितशक्तिकम् । तथाहि वेदः—

'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं यत्तत्सुखं स्वःपदास्पदम् ॥' इत्यादि ॥

---

१. खपुस्तके सिद्धत्वाच्चेति इति पाठः । २. गपुस्तके अनुभववदेव विरुद्धमिति । ३. कपुस्तके प्रमातृत्वेनाज्ञाननिवृत्तिसामर्थ्यादिति । ४. क१ पुस्तके कीदृशं कर्मेत्याद्यपेक्षायां गार्हपत्यमादधाति भुव इत्याहवनीयमित्यादिगुणवाक्येषु इति ।

तैत्तरीयकस्य तृतीयप्रपाठकवाक्यमुदाहरति—**यत इत्यादि** । **जीवन्तीत्यनन्तरं** 'यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म'इति श्रुतिशेषभागो बोध्यः । एवं च प्रयन्तीत्यंशेन ब्रह्मण उपादानत्वमपि ध्वनितम्, अन्यथा तत्र लयासम्भवात् । नहि कपालातिरिक्तोऽसमवायिकारणनाशजन्यो घटनाश इति कश्चिच्चेतनो ब्रवीतीत्यवधेयम् । पुनरपि तैत्तरीयश्रुतिमुदाहरति—**सत्यमित्यादि** । 'ब्रह्मैवेदं निहितं गुहायाम्' इति श्रुतिशेषः । **लक्ष्यस्य,** तत्पदलक्ष्यस्य । **एवमित्यस्य** समर्पिका इत्यनेनान्वयः । त्वंपदार्थवाच्यार्थसमर्पिकां बृहदारण्यकषष्ठाध्यायस्थज्योतिर्ब्राह्मणमध्यपातिश्रुतिमुदाहरति—**तद्यथा महामत्स्य इति** । अस्य शेषभागः 'उभे कूलेऽनुसञ्चरति पूर्वं चापरं चैवमेवायं पुरुष एतावुभावन्तावनुसञ्चरति स्वप्नान्तं बुद्धान्तं च' इति । ज्योतिर्ब्राह्मणस्थलक्ष्यार्थसमर्पकं वाक्यमुदाहरति—**योऽयमित्यादि हृद्यन्तर्ज्योतिः पुरुष इत्यनन्तरम्,** 'स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव' इत्यन्तो द्रष्टव्यः । उषस्तब्राह्मणस्थवाक्यं लक्ष्यस्य समर्पकं पुनरुदाहरति—**न दृष्टेरिति** । 'न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुयान्न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीथा, एष त आत्मा, अतोऽन्यदार्तं' इत्यन्तं बोध्यम् । **लक्ष्यस्य,** त्वंपदलक्ष्यस्य । **मुख्यार्थेति** । एतेनान्वयानुपपत्त्या लक्षणा आद्रियते इति ध्वनितम् । यदि गौरनित्य इत्यत्रैवान्वयबोधः सम्भवति तदा तात्पर्यानुपपत्त्यैव लक्षणेत्यवधेयम् । विनापि लक्षणामनुभवप्रकारमाह—**सुषुप्ताविति** । एवं च लक्षणानादरणीयेति भावः । विशिष्टवाच्यार्थबोधादेव निर्विकल्पकं स्मरणमित्याशयेनाह—**अद्वितीयेति** । प्रमेयवद्रामजनकवृत्तिधर्मवदित्यादिना बोधितस्य दशरथस्य दशरथत्वान्यप्रमेयांशस्य दशरथत्वान्यरामजनकवृत्तित्वांशस्य च मोहात् दशरथत्वांशेऽन्यप्रकारकं दशरथज्ञानं यथा परे वदन्ति तथाऽत्रापीत्यर्थः । परसम्मतिमाह—**इच्छन्तीति** । उभयत्रापि साधकमाह—**तात्पर्येति** । त्रिपुटीप्रत्यक्षवादिप्राभाकरमतमपनुदति—**एतेनेति** । तात्पर्यं आत्ममात्रे, अन्यथा 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुतिविरोधः । नच तत्रापि तं विदित्वैव इत्येवकारभङ्गः कर्तव्यः, अन्यथा ज्ञानातिरिक्तस्यापि कर्मणो मोक्षजनकत्वापत्तिरिति वाच्यं, 'नान्यः पन्था विद्यतेऽयनाय' इत्यनेनैव तद्व्यावृत्तेः । ज्ञातज्ञापकत्वेन नान्य इत्यंशवैयर्थ्यात्, 'न कर्मणा न प्रजया' इत्यादिश्रुतिविरोधाच्च । न च शाब्दबोधे प्रमितिप्रमात्रोर्भानाभावेऽपि सर्वत्र भानाभावो न सिद्ध इति वाच्यं, नियमभङ्गेऽन्यत्र भानसाधकाभावादन्यत्र भानेऽपि क्षत्यभावाच्च । ननु शुद्धात्ममात्रविषयकपदार्थज्ञानादेव मोक्षोऽस्तु तत्राह—**पारोक्ष्येति** । ननु, तत्त्वंपदार्थयोः पौनरुक्त्यं यत् तद्वाच्यार्थयोर्लक्ष्यार्थयोर्वा । नाद्य इत्याह—**वाच्यार्थस्येति** । द्वितीयेऽप्येवं

क्रमेण वक्तव्यम् । तथाहि—घटं घटं[1] इत्यादौ उद्देश्यतावच्छेदकविधेयतावच्छेदकयोरुद्देश्यविधेययोर्वा ऐक्येन शाब्दबोधानुदयात् पदयोर्विरुद्धप्रकारकोपस्थितेः कारणत्वं वाच्यम् । तथाच निष्प्रकारकचैतन्यमात्रोपस्थापकयोस्तत्त्वंपदयोर्[2]गतं पौनरुक्त्यमिति । सोऽपि न निर्विकल्पकः, साधारणसमानप्रकारकोपस्थित्यभावस्यैव कारणत्वकल्पनेन सर्वसामञ्जस्यात् । एतेन तत्त्वंपदलक्ष्यार्थयोर्न पौनरुक्त्यं वाच्यार्थस्य भेदेनावभासमानत्वादित्युपालम्भः परास्तः । यदपि च वाक्यार्थे संसर्गाभावात्पदार्थबोधवाक्यार्थबोधयोरैक्यरूप्यमिति, तदपि न रमणीयम् । भूतले घटो न, घटाभाववद्भूतलमित्यत्र सप्तम्यर्थमतुबर्थसम्बन्धभूतलघटाभावरूपविषयैक्येऽपि विषयताभेदवत्पदार्थबोधापेक्षया वाक्यार्थबोधे जीवब्रह्मणोरभेदरूपस्य वैलक्षण्यभानात् । स चाभेदः स्वरूपसम्बन्धविशेषः प्रतीतिविशेषसाक्षिकः । परे त्वयं घट इति शाब्दबोधे घटस्यैव विशेष्यत्वप्रकारत्वसांसर्गिकविषयत्ववदेकस्यैव चैतन्यस्य विशेष्यत्वप्रकारत्वाङ्गीकारेण सर्वसामञ्जस्यात् । विशेष्यत्वं प्रकारत्वं च स्वरूपमेव नातिरिक्तम् । नच विशेष्यत्वप्रकारत्वोक्तौ निर्विकल्पकत्वहानिरिति वाच्यम् । पारिभाषिकनिर्विकल्पकत्वहानावपि अखण्डार्थविषयकत्वाक्षतिरिति वदन्ति । वस्तुतस्तु पदार्थवाक्यार्थयोरैक्यरूप्येऽपि न क्षतिः, अपि ममानुकूल एव । उक्तं च सिद्धान्तभास्करादौ वाक्यार्थबोधस्येव पदार्थबोधस्याज्ञाननाशकत्वमित्युपरम्यते । तर्हि वाक्यार्थबोधस्य कथमखण्डार्थविषयकत्वमत आह—**लक्ष्यार्थस्य चेति** । ननु स्मरणस्य निर्विकल्पकत्वमदृष्टचरमत आह—**पदजन्येति । प्रमात्वेनेति** । निर्विकल्पकत्वस्य प्रमात्वं विशेष्यावृत्ति प्रकारकत्वं अबाधितार्थविषयकत्वं वेत्यन्यदेतत् । नन्वेवमपि निर्विकल्पकवाक्यार्थबोधो न संगच्छते लक्ष्यतावच्छेदकरूपेण लक्ष्यभाननियमादत आह—**अत इति** । यतो वाक्यार्थबोधो निर्विकल्पकः 'तमेव विदित्वातिमृत्युमेति' इति श्रुत्यादिसिद्धः, यतश्च निर्विकल्पकवाक्यार्थबोधे निर्विकल्पकपदार्थोपस्थितिरङ्गम्, अतोऽत्र न लक्ष्यतावच्छेदकरूपेण लक्ष्यभानमित्यर्थः । ये तु लक्ष्यतावच्छेदकरूपेण लक्ष्यभानमङ्गीकुर्वन्ति तेऽप्यतिप्रसङ्गभङ्गाय नानाधर्मवत् धर्मिस्थल एव न तु निर्धर्मकस्थले, तत्रातिप्रसङ्गाभावात् । लक्ष्यभेदेन लक्ष्यतावच्छेदकस्य नानात्वेनानुगतत्वात् । लक्ष्यतावच्छेदकभिन्नप्रकारेणोप[3]स्थित्यभावस्य उभयसाधारणतयानुगतत्वाच्चेति दिक् ।

**ननु तर्हि वेदान्तवाक्येभ्य एव पदार्थोपस्थितौ वाक्यार्थबोधे च सति तस्य स्वत एव प्रामाण्यात्तेनाज्ञानतत्कार्यनिवृत्त्युपपत्तौ किं विचारेणेति चेत्, सत्यम्, वेदान्ता यद्यपि स्वतःप्रामाण्यान्निर्विक-**

---

१. क१ पुस्तके घटं पटः इति पाठः । २. तस्मिन्नेव तत्त्वम्पदार्थयोरिति । ३. खपुस्तके लक्ष्यतावच्छेदकप्रकारेण इति पाठः ।

रूपकमात्मसाक्षात्कारं जनयन्ति तथापि मन्दमतीनां वादिविप्रतिपत्तिजसंशयप्रतिबन्धेन तस्याज्ञाननाशकत्वासामर्थ्यात्, विचारेण तु संशयनिवृत्तौ निरपवादमज्ञाननिवृत्तिरिति संशयबीजभूतवादिविप्रतिपत्तिनिराकरणार्थं विचार आरभ्यते ।

इदानीं विचारमाक्षिपति—**नन्विति** । तथाच शास्त्रं नारम्भणीयमिति भावः । अहं ब्रह्म भवामि नवेत्यादिविषयसंशयाहितप्रामाण्यसंदेहेनाप्रामाण्याशङ्काऽनास्कन्दितनिश्चयाभावाद्वाक्यार्थबोधस्यना ज्ञाननिवर्तकत्वमित्याह—**सत्यमिति** । तत्र त्वंपदार्थ इति आचार्यैर्यद्यप्याहत्य भूम्यादीनामात्मत्वनिषेध एव कृतो न विप्रतिपत्तिः प्रदर्शिता तथापि विनाविप्रतिपत्तिं निराकरणेऽनुक्तोपालम्भः स्यात्तदर्थं निर्णयाक्षिप्ता विप्रतिपत्तिर्वक्तव्या, सैव प्रदर्शितेत्यवधेयम् ॥

---

# प्रथमो विभागः ।

## त्वंपदार्थनिर्णयः ।

तत्र त्वम्पदार्थे विप्रतिपत्तयः प्रथमं प्रदर्श्यन्ते । तत्पदार्थस्य शास्त्रतात्पर्यविषयतयाऽभ्यर्हितत्वेऽपि त्वम्पदार्थस्य शास्त्रफलमोक्षभागितया ततोऽप्यभ्यर्हितत्वात् ।

तत्र देहाकारपरिणतानि चत्वारि भूतान्येव त्वम्पदार्थ इति चार्वाकाः। चक्षुरादीनि प्रत्येकमित्यपरे। मिलितानीत्यन्ये। मन इत्येके। प्राण इत्यन्ये। क्षणिकं विज्ञानमिति सौगताः। शून्यमिति माध्यमिकाः। देहेन्द्रियातिरिक्तो देहपरिमाण इति दिगम्बराः। कर्ता भोक्ता जडो विभुरिति वैशेषिकतार्किकप्राभाकराः। जडो बोधात्मक इति भाट्टाः। भोक्तैव केवलबोधात्मक इति साङ्ख्याः पातञ्जलाश्च। अविद्यया कर्तृत्वादिभाक् परमार्थतो निर्धर्मकः परमानन्दबोधरूप एवेत्यौपनिषदाः। एवं सामान्यतोऽहम्प्रत्ययसिद्धचिदात्मनि वादिविप्रतिपत्तिभिः सन्दिग्धेऽहम्प्रत्ययस्यालम्बनविशेषनिर्णयायाह भगवानाचार्यः—

नन्वभ्यर्हिततत्पदार्थस्यैव प्रथमतो विप्रतिपत्तिप्रदर्शनमुचितं न त्वंपदार्थस्य तत्राह—**तत्पदार्थस्येति** । **अपर इति** । त्वंपदार्थ इत्यनेनान्वयः । एवमुत्तरत्र । **जड इति** । स्वप्रकाशकभिन्न इत्यर्थः । **जडबोधात्मक इति** । मामहं न

जानामीति प्रतीतेः कर्तृकर्मविरोधात् । जडबोधात्मकमात्मानमङ्गीकुर्वन्ति भाट्टा इत्यर्थः ॥ इदानीं व्याख्येयग्रन्थस्यावतारिकामाह—**एवमिति** । कारिकास्थाहंप्रत्ययस्य व्याख्यानमाह—

**न भूमिर्न तोयं न तेजो न वायु-**
**र्न खं नेन्द्रियं वा न तेषां समूहः ।**
**अनैकान्तिकत्वात्सुषुप्त्येकसिद्ध-**
**स्तदेकोऽवशिष्टश्शिवः केवलोऽहम् ॥ १ ॥**

**अहम् अहम्प्रत्ययालम्बनम् । एकः अद्वितीयः । अवशिष्टः सर्वद्वैतबाधेऽप्यबाधितः । शिवः परमानन्दबोधरूपस्तस्यैव मङ्गलरूपत्वात्[1] । केवलो निर्धर्मकः । तेनाद्वितीयस्सर्वप्रमाणाबाध्यः परमानन्दबोध एवाहम्प्रत्ययावलम्बनमित्यौपनिषदपक्ष एव श्रेयानित्यर्थः । एतदुपपादनायेतरवादिमतानि निराकरिष्यन् प्रथमं देहात्मवादं निराकरोति न भूमिर्न तोयं न तेजो न वायुर्न खमिति । तत्राहमिति सर्वत्र प्रत्येकं नञा सम्बध्यते[2] । या भूमिः साऽहं न भवामि योऽहं स भूमिर्न भवतीति[3] च परस्परतादात्म्याभावो द्रष्टव्यः ।**

**अहम्प्रत्ययावलम्बनमिति** । अहम्प्रत्ययविषय इत्यर्थः । पदार्थं व्याख्याय वाक्यार्थमाह—**तेनेति** । देहात्मवादस्यातितुच्छत्वादादौ तं निराकरोति—**प्रथममिति । परस्परेति** । उभयत्रैव एकस्तादात्म्याभावः शाब्दः, अपरस्तादात्म्याभाव आर्थ इत्यवधेयम् ।

**यद्यपि वादिना प्रत्येकं भूम्यादेरात्मत्वं नाभ्युपेयते संघातस्यैव तदभ्युपगमात् तथापि तन्मते अवयव्यनङ्गीकारात्पञ्चमतत्त्वाभ्युपगमप्रसङ्गेन च संयोगादिसम्बन्धानभ्युपगमात् संहन्तुरभावाच्च संघातो नोपपद्यत इत्यभिप्रेत्य प्रत्येकं भूतनिराकरणेन भौतिकदेहात्मवादो निराकृतः ।**

भवतु संघात एवात्मा तत्राह—**तथापीति । संघातो**ऽवयवी संयुक्तद्रव्यं वा । तत्र नाद्य इत्याह—**अवयवीति** । नान्त्य इत्याह—**संयोगादिति** । तत्रैव हेतुमाह—**पंचमेति । संहन्तृ** संघातकर्तृ ।

१. गपुस्तके परमानन्दबोधस्सन्निति ।
२. कपुस्तके सर्वत्र प्रत्येकतया सम्बध्यत इति पाठस्तन्न युक्तः ।
३. खगपुस्तकयोर्या भूमिः सोऽहं न भवामि योऽहं सा भूमिर्न भवतीति ।

यद्यपि च भूतचतुष्टयतत्त्ववादिनो मते आवरणाभावत्वेनाभिमतस्य स्थिरस्यासत[1] आकाशस्य देहानुपादानत्वं, तथापि सिद्धान्ते तस्य भावत्वं देहोपादानत्वाद्यङ्गीकारात्[2], तत्राप्यात्मत्वप्रसक्त्या तन्निराकृतम्। अथवा न वायुरित्यन्तमेव देहात्मवादस्य निराकरणं न खमिति तु शून्यवादस्य, खशब्दस्य शून्यवाचकत्वात्।

देहानुपादानत्वे हेतुमाह—**असत इति**। असत्वे हेतुमाह—**स्थिरस्येति**। स्वसिद्धान्तसिद्धेऽपि तन्मते सिद्ध्यभावात्तन्निराकरणमनुचितमित्यत आह—**अथवेति**। **शून्यवादस्येति**। निराकरणमित्यनेनान्वयः। मिलितानामित्यादिपरिणतानामित्यस्य पूर्वेणान्वयः।

नेन्द्रियमिति प्रत्येकमिन्द्रियाणामात्मत्वनिरासः। न तेषां समूह इति मिलितानां भूतानां देहावयव्याकारेण परिणतानामिन्द्रियाणां च मिलितानां निरासः। पूर्वं संघातमनभ्युपगम्य प्रत्येकं भूतानि निराकृतानि। अधुना तु संघातमभ्युपगम्यापि निराकृतानीति भेदः। भूतनिराकरणेन भौतिकयोः प्राणमनसोर्निरासः। मनोनिराकरणेन मनोवृत्तेः क्षणिकविज्ञानस्य देहातिरिक्तस्य कर्तृत्वभोक्तृत्वादिविशिष्टस्य च निरासः। सिद्धान्ते ज्ञानेच्छासुखादीनामन्तःकरणाश्रयत्वाभ्युपगमात्, कामसङ्कल्पादीन्प्रकृत्य[3] मन एवेति श्रुतेः। (बृ. आ. १।५।३)। तेन देहमारभ्य केवलभोक्तृपर्यन्तानां तत्तद्वाद्यभिमतानामनात्मत्वं प्रतिज्ञातं भवति। तत्र हेतुमाह—अनैकान्तिकत्वादिति। व्यभिचारित्वात् विनाशित्वादिति यावत्। आत्मनो देशकालापरिच्छिन्नत्वात्तत्परिच्छिन्नानां घटादिवदनात्मत्वात्, तद्ध्वंसप्रागभावयोश्च गृहीतुमशक्यत्वात्, अनात्मनां जडत्वात्, स्वभिन्नस्य चात्मत्वाभावात्, आत्मन एकत्वेऽपि सुखदुःखाद्याश्रयाणामन्तःकरणानां भेदाभ्युपगमाद्व्यवस्थोपपत्तेः, स्वेनैव स्वाभावग्रहणे विरोधात्, ग्राह्यकाले ग्राहकासत्त्वात् ग्राहकसत्त्वे ग्राह्याभावात्[4] कृतहान्यकृताभ्यागमप्रसंगाच्च न तस्य ध्वंसप्रागभावौ। सद्रूपस्यात्मनः सर्वत्रानुगमाच्च

१. कपुस्तके आवरणाभावत्वेनाभिमतस्यास्थिरस्य सत इति।
२. खगपुस्तकयोर्भावत्वेन देहोपादानत्वाद्यङ्गीकारादिति।
३. कगयोर्कामादीन्प्रकृत्येति।
४. कपुस्तके ग्राह्यकाले ग्राहकासत्त्वात् ग्राह्यसत्वे ग्राहकाभावादिति पाठस्स स्पष्टमेव दोषवान्।

**नात्यन्ताभावसंभवः। द्वैतस्य मिथ्यात्वेनाधिष्ठानसत्तादात्म्यापन्नतयैव सिद्धत्वात्[1], शुक्तिरजतादिवद्ध्यस्तत्वेन तत्तादात्म्यभावानुपपत्तिः। तेनात्माना भावप्रतियोगी। अभावप्रतियोगिनश्च देहेन्द्रियादयः। तेनामी नात्मानः। किं तु स्वप्रकाशबोधरूपे आत्मनि अद्वैतेऽप्यनाद्यनिर्वचनीयाऽविद्याकल्पिता अनिर्वचनीया एवेति सिद्धान्तरहस्यम्।**

पौनरुक्त्यमाशङ्क्याह—**पूर्वमिति**। ननु पूर्वपक्षे आशङ्कितं प्राणमनसोरात्मत्वं किमिति न निराकृतं तत्राह—**भूतनिराकरणेनेति**। एवमप्याशङ्कितं सौगतमतं किमिति न निराकृतमत आह—**मनोनिराकरणेनेति**। क्षणिकविज्ञानस्येति वक्ष्यमाणनिरास इत्यनेनान्वयः। वैशेषिकमतं निराकरोति—**देहातिरिक्तस्येति**। कर्तृत्वादिविशिष्टं तु मन एवेत्याशयः। तर्हि प्रत्यक्षसिद्धानामहंकरोमीति प्रत्ययानां का गतिरत आह—**सिद्धान्त इति**। कर्तृत्वादीनां मनोधर्मत्वे प्रमाणमाह—**कामेति**। 'कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव' इति बृहदारण्यकश्रुतेरेतेषां मनोधर्मत्वम्। एवकारेण आत्मधर्मत्वं निराकृतम्। मन एवेत्यनेन कार्यकारणयोरभेदोऽपि ध्वनित इत्यवधेयम्। एनमर्थं भागवतस्मृतिरप्यनुवदति—

हर्षशोकभयक्रोधलोभमोहस्पृहादयः।
अहङ्कारस्य एवैते जन्म मृत्युश्च नात्मनः॥ इति॥

एवं मोक्षकाण्डकल्पतरुधृतब्रह्मपुराणवचनमप्यचेतनस्यैव कर्तृत्वादिकं बोधयति। **न चेतनस्येति**। तथाहि—

कुर्वन्त्यचेतनाः कर्म देहेन्द्रियगणाः सदा।
चेतनस्तदधिष्ठाता शान्तात्मा न करोत्यसौ॥ इति॥

तथाचाहङ्करोमीति प्रत्ययस्याहङ्कार एव विषयो नात्मा। एवं श्रुतिस्मृतिविरोधमङ्गीकृत्यापि अहङ्करोमीतिप्रत्ययबलात् आत्मनः कर्तृत्वादिकमङ्गीकुरुषे चेत्तर्हि अहं गौरः अहं स्थूलः अहं गच्छामीत्यादिप्रतीतिबलात् देहात्मवादोपि आस्थेय इत्यलं मृतमारणेनेति दिक्। ज्ञानादेर्मनोवृत्तित्वमुपपादयति **सिद्धान्त इत्यादिना श्रुतेरित्यन्तेनेति** परमार्थः॥ कर्तुर्भोक्तुरात्मत्वनिराकरणेन भट्टसाङ्ख्यपतञ्जलिमतमपि निराकृतम्। शून्यवादस्य न खमित्यनेन निराकरणमिति[2]। मध्यमपरिमाणस्य विनाशित्वेन

---

१. कपुस्तके सिद्धत्वादिति पदं न वर्तते।
२. क१पुस्तके शून्यवादस्य......निराकरणमिति इत्येतद्वाक्यं नास्ति।

घटादिवदात्मभिन्नत्वमिति दिगम्बरमतमुपेक्षितम् ॥ आत्मनि हेत्वभावमाह—**आत्मन इति** ॥ तर्कमाह—**तत्परिच्छिन्नानामिति** । देशकालपरिच्छिन्नानामित्यर्थः । ग्राहकभावादपि न तस्य ध्वंसप्रागभावावङ्गीकरणीयावित्याह—**तद्ध्वंसेति** । आत्मध्वंसेत्यर्थः । नन्वनात्मा ग्राहकोऽस्तु तत्राह—**अनात्मनामिति । जडत्वात्**, ज्ञानभिन्नत्वात् ॥ एकात्मवादिमते कथमहं सुखी अहं दुःखीत्यादिप्रत्यय इत्यत आह—**आत्मन इति** । नन्वात्मैव स्वाभावं गृह्णातु तत्र आह—**स्वेनैवेति** ॥ विरोधं विवृणोति—**ग्राह्यकाल इति** ॥ आत्मनो विनाशित्वे प्रतिकूलतर्कं प्रदर्शयन्नुपसंहरति—**कृतहानीति** । आत्मनो नाशाङ्गीकारे अदत्तफलस्य सर्वस्य कर्मणो नाशः पुनरकस्मात् उत्पत्त्यङ्गीकारे तदुत्पत्तिमव्यवहिताभिमतोत्तरक्षणेऽनुभूयमानयोः सुखदुःखयोरनुपपत्त्याऽनेनात्मनाऽकृतस्य कर्मसम्बन्धोऽस्य वक्तव्यः ॥ तथा चेदं द्वयमनिष्टमित्यर्थः ॥ नास्ति कस्यापि तप्तशिलारोहणादिकर्मणां कृतानामावश्यकफलदातृत्वमिति नियम इति तन्मतेऽपि दोष इति बोध्यम् ॥ ननु माऽस्तु कालपरिच्छेदः देशपरिच्छेदस्तु केन वारणीय इत्यत आह—**सद्रूपस्येति** । सद्रूपस्यात्मनः सर्वत्र सम्बन्धत्वेन घटो नास्तीति प्रत्ययवत् सन्नास्तीति प्रत्ययाभावादिति भावः ॥ नन्वेवमन्योन्यभावनिरासात् तत्प्रतियोगित्वेनैव परिच्छिन्नत्वादविनाशित्वमित्यत आह—**द्वैतस्येति** । फलितमाह—**तेनात्मा नाभावप्रतियोगीति** ॥ अनात्मनामभावप्रतियोगित्वेन किं साधनीयं तत्राह—**अभावप्रतियोगिनश्चामीत्यादि सिद्धांतरहस्यमित्यंतेन** ॥

**ननु, बोधरूप आत्मेति तवाभ्युपगमात्सुषुप्तौ च बोधाभावात् गाढं मूढोऽहमासं न किञ्चिद्वेदिषमिति सुप्तोत्थितस्य परामर्शात्कथमव्यभिचारिता तस्येत्याशङ्क्याह–सुषुप्त्येकसिद्ध इति। अयमर्थः। आत्मनः सुषुप्तिसाक्षित्वान्न तत्र तदभावः, अन्यथा मूढोऽहमासमिति परामर्शानुपपत्तेः, मातृमानमितिमेयानां व्यभिचारित्वेऽपि तद्भावाभावसाक्षिणः कालत्रयेऽप्यव्यभिचारात् ।**

अथ न प्रमातुः सर्वग्राहकस्य साक्षिग्राह्यत्वमित्याशङ्कते—**नन्विति** । तर्कं आह—**अन्यथेति** ।

**ननु, प्रमाश्रयः प्रमाता स एव कर्ता भोक्ता प्रदीपवत्स्वपरसाधारणसर्वभासकश्चेति न घटादिवत्साक्षिसापेक्ष इति चेत्, न, विकारित्वेन स्वविकारसाक्षित्वानुपपत्तेः दृश्यस्य द्रष्टृत्वानुपपत्तेः, प्रमातुश्च परिणामित्वेन दृश्यत्वात्, एकस्य कूटस्थस्यैव सर्वसाक्षित्वात् ।**

**विकारित्वेनेति** । प्रमातुरिति शेषः ॥ हेतुमाह—**दृश्यस्येति** । आस्तामियं व्याप्तिः प्रमातुर्भासकत्वाभावे को भासकस्तत्राह—**एकस्येति** । न च साक्षिणः कथमव्यभिचारित्वं अविद्यावच्छिन्नत्वेन विनाशित्वादिति वाच्यम् । अविद्योपलक्षितस्य साक्षित्वात् । **कूटस्थः** अविकारि । एकरूपतया तु यः कालव्यापि स कूटस्थ इत्यमरः ॥

**ननु, एकः कूटस्थो निर्धर्मकः साक्षी नाद्रियतेऽप्रामाणिकत्वादिति चेत्, न, 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' (श्वे. ६।१४, मुं. २।२।१०, क. २।५।१५), 'न दृष्टेर्द्रष्टारं पश्येः' (बृ. आ. ३।४।२) 'अदृष्टो द्रष्टा, नान्योऽतोऽस्ति द्रष्टा' (सैव ३।७।२३) इत्यादि वदता वेदान्तप्रमाणराजेन तस्यैव सर्वसाक्षित्वेनाभिषिक्तत्वात् ।**

वाचो भङ्ग्याह[1]—**एक इति** ॥ ग्रामे पञ्च त्रयोऽरण्ये नगरे सप्त साक्षिण इत्यादिस्मृत्या बहूनां साक्षीत्वप्रतिपादनात् ॥ कूटस्थ इत्यनेन कूटसाक्षिणो नादरणीयत्वमुक्तम् । अधार्मिकोऽपि न साक्षि स्मृतिनिषिद्धत्वादित्युक्तं निर्धर्मक इत्यनेन ॥ हेतुमाह—**अप्रामाणिकत्वादिति** ॥ श्वेताश्वतरषष्ठाध्यायस्य वाक्यमुदाहरति—**तमेवेति** ॥ एतस्य पूर्ववाक्यम्—'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः' इत्यन्तम् । एतदानुपूर्वीवाक्यं[2] कठवल्ली द्वितीयाध्यायद्वितीयवल्ल्यामपि इति बोध्यं ॥ बृहदारण्यकस्थवाक्यमुदाहरति—'न दृष्टेर्द्रष्टारं पश्येत्' इत्यादिना । राज्ञा यः साक्षी अङ्गीक्रियते स एवार्थसाधकः प्रामाणिकश्चेत्युक्तं **वेदान्तप्रमाणराजेनेत्यनेन** ॥

**ननु, महदेतदिन्द्रजालं, प्रमाश्रयानकूटस्थान्विहाय कूटस्थमप्रमाश्रयमेव प्रमाणराजः सर्वसाक्षिणं करोतीति । बाढं, इन्द्रजालमेवैतत्स्वप्नवदविद्याविलसितत्वात्, तथापि दृश्यस्य घटादिवज्जडत्वेन कथं प्रमाश्रयत्वमिति चेत्, न, दर्पणादिवदतिस्वच्छत्वेन चिद्बिम्बग्राहकत्वा[3]च्चित्तादात्म्याध्यासाद्वा[4] ।**

इन्द्रजालत्वे हेतुमाह—**अविद्याविलसितत्वादिति** । अविद्याविरचितत्वादित्यर्थः । दृष्टान्तमाह—**स्वप्नवदिति** । दृश्यस्यान्तःकरणस्य चैतन्याश्रयत्वरूपं प्रमाश्रयत्वं कुत इत्याक्षिपति—**तथापीति** । **चिद्बिम्बग्राहकत्वादिति** । एवं च प्रतिबिम्बग्राहकत्वमेव चैतन्याश्रयत्वमिति भावः ॥

---

१. क१पुस्तके वाचो भ्रान्तिमाहेति पाठः ।

२. एतदानुपूर्वकमिति खपुस्तके, एतदानुपूर्वीकमिति च गपुस्तके ।

३. कपुस्तके बिम्बग्राहकत्वादिति ।

४. तस्मिन्नेव चैतन्यतादात्म्याध्यासादिति ।

**ननु, नीरूपस्य निरवयवस्यात्मनः कथं प्रतिबिम्ब इति चेत्, कात्रानुपपत्तिः, विभ्रमहेतूनां विचित्रत्वात्, जपाकुसुमरूपस्य नीरूपस्य निरवयवस्यापि स्फटिकादौ प्रतिबिम्बदर्शनाच्छब्दस्यापि प्रतिशब्दाख्यप्रतिबिम्बोपलम्भात्तयोः सम्प्रतिपन्नप्रतिबिम्बवैलक्षण्यानिरूपणात् ।**

प्रतिबिम्बत्वमाक्षिपति—**नन्विति । नीरूपस्यापीति** ॥ अपिशब्दान्निरवयवस्यानुकर्षः ॥ ननु उभयत्रापि प्रतिबिम्बत्वमेव नास्ति तत्राह—**तयोः सम्प्रतिपन्नेति** ॥

**तथापीन्द्रियग्राह्यस्यैव प्रतिबिम्ब इति चेत्, न, व्यभिचारात्, अनिन्द्रियग्राह्यसाक्षिप्रत्यक्षस्याप्याकाशस्यापि जलादौ प्रतिबिम्बोपलम्भात् । अन्यथा जानुमात्रेऽप्युदके अतिगम्भीर(ता)प्रतीतिर्न स्यात् । तर्हि अन्धस्य जले प्रतिबिम्बप्रतीतिः कुतो न जायते,[1] सालोकस्य साभ्रस्य प्रतिबिम्बतत्त्वात्तद्ग्रहणार्थं चक्षुषोऽपेक्षणात् । एतेन नीलं नभ इत्यादिविभ्रमेऽपि चक्षुरन्वयव्यतिरेकौ व्याख्यातौ, तत्र सालोकस्याकाशस्याधिष्ठानत्वात् । तस्माचाक्षुषप्रतिबिम्बमेव रूपसापेक्षमित्यवधेयम् ।**

प्रकारान्तरेण पुनराक्षिपति—**तथापीति ।** भाष्यकारमतमालम्ब्याह—**साक्षिप्रत्यक्षस्यापीति । अतिगम्भीरेति ।** अतिविशालस्याप्युपलक्षणमिति बोध्यं । ननु प्रतिबिम्बस्य साक्षिभाष्यत्वे अन्धस्य किमिति न प्रत्ययस्तत्राह—**प्रतिबिम्बस्येति** ॥ ननु तर्हि नीलं नभ इतिप्रत्यये तव मते कथं चक्षुरन्वयः इन्द्रियाग्राह्यस्याकाशस्याधिष्ठानत्वात् तत्राह[2]—**एतेनेति** ॥ ननु तत्रैवात्र नाधिष्ठानग्रहणार्थं चक्षुरपेक्षा इत्याशङ्क्य न केवलमाकाशमधिष्ठानं येन नापेक्षा स्याच्चक्षुषः किन्त्वालोकोऽपि, तथा चालोकांशे चक्षुषः अपेक्षणात् न त्वदुक्तदोष इत्याह—**सालोकेति** ॥ उपसंहरति—**तस्मादिति** ॥

**तथाप्यात्मनः प्रतिबिम्बे किं प्रमाणमिति चेत्, शृणु—'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय' (बृ. आ. २।५।१९) 'मायाभासेन जीवेशौ करोति' (नृ. उ. ९), 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' (ब्र. बिं. १२) इत्यादि श्रुतिः, 'स एष इह प्रविष्टः' (बृ. आ.**

---

१. क पुस्तके 'तर्हि......न जायते' इत्येतद्वाक्यं न दृश्यते तथापि तदस्मिन्प्रकरणे आवश्यकमिति खगपुस्तकयोर्गृहीतम् ।

२. खगपुस्तकयोः कथं चक्षुरन्वयस्तत्राह इति पाठः ।

**१।४।७), 'स एतमेव सीमानं विदार्यैतयाद्वारा प्रापद्यत' (ऐ.१।३।१२), 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै. २।६।१) इत्यादि प्रवेशश्रुत्यन्यथानुपपत्तिः, 'आभास एव च' (ब्र. सू. २।३।५०), 'अतएव चोपमासूर्यकादिवत्' (तदेव. ३।२।१८) इत्यादि पारमर्षसूत्राणि च तत्र मानानि ।**

बृहदारण्यकीयमधुब्राह्मणस्थं वाक्यमुदाहरति—**रूपं रूपं प्रतीति** ॥ 'तदेतत्' ऋषिः पश्यन्नवोचत्' इत्याद्यं मानमित्यनेन अन्वयः। 'इन्द्रो मायाभिः पुरुरूप ईयत' इत्यन्तं बोध्यम् । काठके द्वितीयवल्ल्यां

'अग्निर्यथैको भवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च' ॥ इति ॥

इत्याद्यपि बोध्यम् ॥ उत्तरनृसिंहतापनीयस्थं वाक्यमुदाहरति—**मायेति** ॥ मायाभासेन जीवेशावभिव्यनक्तीत्यर्थः ॥ तैत्तरीयक श्रुतिमुदाहरति—**स एतमेवेति** ॥ बृहदारण्यकश्रुतिमुदाहरति—**स एष इति । तत्सृष्ट्वेति** । आदिपदग्राह्या 'यथा ह्ययं ज्योतिरात्मा विवस्वानपोभिन्ना बहुधैकोऽनुगच्छन् उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' इत्यादिश्रुतिः । 'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्' इत्याद्यूह्यम् ॥ बादरायणीयद्वितीयाध्यायस्य तृतीयपादसूत्रसंमतिमाह—**आभास एवेति** । जलसूर्यकादिवदाभास एव जीवो न वस्त्वन्तरं परमात्मन इत्यर्थः । बादरायणीयतृतीयाध्यायस्य द्वितीयपादसूत्रमुदाहरति—**अतएव चोपमासूर्यकादिवदिति** ॥ 'यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नः रसघन एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' इत्यादिना यत ऐक्यरूप्यं प्रतिपादितं यतश्च 'अथात आदेशो नेति नेति' इत्यादिना रूपान्तरं प्रतिषिद्धम्, अतएवास्योपाधिनिमित्ताऽपारमार्थिकी विशेषवत्ता इत्यभिप्रेत्य जलसूर्यकादिवदित्युपमा उपादीयते मोक्षशास्त्रेषु । एवं च यथासूर्यादिप्रतिबिम्बं जलचलनेन चलति जलभेदेन भिद्यते तथा आत्माऽपि उपाधिधर्मेण धर्मवानिव भवति ॥ उपाधिभेदेन भिन्न इव भवति । वस्तुतो निर्धर्मको निर्भेदोऽद्वितीयः । उक्तं च भागवते—

यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः ।
दृश्यतेऽसन्नपि द्रष्टुरात्मनोऽनात्मनो गुणः ॥ इति ॥

यथा जलसूर्यकः सूर्यप्रतिबिम्बः । आदिशब्देन चन्द्रप्रतिबिम्बादिग्रहणम् ॥ तथाचामृतबिन्दूपनिषत्—

'एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' ॥ इत्यादि ॥

तथाच याज्ञवल्क्यस्मृतिरपि—

आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।
तथात्मैको ह्यनेकश्च जलधारास्विवांशुमान् ॥ इति ॥

**तस्य च प्रतिबिम्बस्य सत्यमेवेति प्रतिबिम्बवादिनः, मिथ्यात्वमेवेत्याभासवादिनः । स्वरूपे तु न विवाद एवेत्यन्यदेतत् । अचेतनविलक्षणत्वन्तु तस्य श्रुतिसिद्धमनुभवसिद्धं च । तस्मात्सिद्धमन्तःकरणस्य प्रतिबिम्बाध्यासद्वारा प्रमातृत्वम् ।**

नन्वयं दृष्टान्तिभूतः प्रतिबिम्बः सत्योऽसत्यो वा तत्राह—**तस्य चेति** ॥ तर्हि प्रतिबिम्बस्य चेतनत्वमापतितं तत्राह—**अचेतनविलक्षणत्वमिति** । दर्पणादिवदित्यादिना यच्चित्प्रतिबिम्बग्राहकत्वेन प्रमाश्रयत्वमुक्तमन्तःकरणस्य तदुपसंहरति—**तस्मादिति** ।

**ननु, अध्यासोऽपि नोपपद्यते । तथाहि—आत्मनि वा अनात्माध्यस्यते अनात्मन्यात्मा वा । नाद्यः, तस्य निःसामान्यविशेषवत्वेन सर्वदाभासमानत्वेन सादृश्यादिरहितत्वेन चाधिष्ठानत्वासम्भवात् । नापि द्वितीयः, तस्य मिथ्यात्वाभ्युपगमात् । मिथ्यावस्तुनोऽधिष्ठानत्वे शून्यवादप्रसङ्गात् । तस्य च सत्यत्वे तदनिवृत्तेरनिर्मोक्षप्रसङ्गाच्च । न हि सत्यं क्वचिन्निवर्तते, निवर्तमानं वा भ्रमज्ञानेन । श्रुतयश्च 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' (मुं. २।२।८), 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते अयनाय' (श्वे. ३।८), 'तरति शोकमात्मवित्' (छां. ७।१।३) इत्याद्याः ज्ञानात्सर्वसंसारनिवृत्तिं दर्शयन्त्यः तस्य मिथ्यात्वं सूचयन्ति । 'एकमेवाद्वितीयम्' (छां. ६।२।१), 'अतोऽन्यदार्तम्' (बृ. आ. ३।४।२), 'नेह नानास्ति किंचन' (सैव. ४।४।१९), 'अथात आदेशो नेति नेति' (सैव. २।३।६) इत्याद्याः श्रुतयः साक्षादेव मिथ्यात्वं प्रतिपादयन्ति । दृश्यत्वेन शुक्तिरजतवन्मिथ्यात्वानुमानाच्च । आत्मन्यध्यस्ततयैव चानात्मनि सिद्धे तत्रात्माध्यासः । अनात्माध्यासेन चात्मनो दोषसादृश्यादिसम्भवात् तत्र चानात्माध्यास इत्यात्माश्रयादिदोषप्रसङ्गाच्च । एतेनात्मानात्मा-**

१. कपुस्तके आभासभासवादिन इति ।
२. खपुस्तके निवर्तमानं वा न ज्ञानेन इति, गपुस्तके च निवर्तमानं वा ज्ञानेन इति ।

**ध्यासस्याविद्याकल्पितत्वान्न विकल्पावसर इत्यपास्तम्, स्वप्रकाशात्मनि अविद्याया अप्यनुपपत्तेः। तथाहि साऽपि अध्यस्ताऽनध्यस्ता वा। तत्र आद्ये कथं नात्माश्रयादिदोषप्रसङ्गः। अन्त्ये तस्या अनुच्छेदादनिर्मोक्षप्रसङ्गः। सर्वस्याध्यासमूलत्वे च भ्रमप्रमादिव्यवस्था न स्यात्। एकस्यैवात्मनः प्रमाणप्रमेयप्रमितिप्रमातृरूपता च विरुद्धा, अविरोधाभ्युपगमे वा सौगतमतोपपत्तिरिति।**

नतु दृष्टं हि लोके सामान्यरूपेण ज्ञातं विशेषरूपेणाज्ञातमधिष्ठानम्, ब्रह्म च तद्विपरीतं, तथा च कारणाभावान्नाध्यास इत्याक्षिपति—**नन्विति। तस्येति।** द्वयेति शेषः[1]। **निःसामान्यविशेषत्वेनेति।** निर्गतौ सामान्यविशेषरूपौ धर्मौ यस्मात्तेन इदन्त्वशुक्तित्वादिवत् सामान्यविशेषधर्मरहितत्वाद्ब्रह्म नाधिष्ठानमित्यर्थः। भवतु मिथ्यात्वं किं तेन तत्राह—**मिथ्यावस्तुन इति।** एतदनुपपत्त्या चेत् सत्यत्वमास्थीयते तर्हि अनिर्मोक्षप्रसङ्ग इत्याह—**तस्य च सत्यत्व इति।** आत्मवदिति शेषः। को वा ब्रवीति ज्ञानेन निवर्तते तत्राह—**श्रुतिश्चेति। तस्येति।** स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वादिकं यदा मिथ्यात्वं तदा[2] सूचनं, यदा तु ज्ञाननिवर्त्यत्वं मिथ्यात्वं तदा साक्षान्मिथ्यात्वबोधनमित्यवधेयम्। एवमपि प्रपञ्चमात्रस्य मिथ्यात्वं नागतम्[3] किन्तु हृदयग्रन्थ्यादाविति[4] हृदये निधाय सत्यभिन्नत्वं मिथ्यात्वम्। सत्यत्वं च श्रुतितात्पर्यविषयीभूतत्वमित्याशयेनाह—**एकेति।** एवं चागतं प्रपञ्चमात्रस्य मिथ्यात्वमित्यवधेयम्। इदं तु वाक्यं छान्दोग्यस्थम्। आर्तिर्विनाशः। इदं च पूर्वमीमांसायां सुप्रसिद्धम्। विवेचितं चास्माभिः सिद्धान्तभास्करे। विनाशप्रतियोगित्वं मिथ्यात्वमित्याशयेनाह—**अतोऽन्यदिति।** इदं तु वाक्यं बृहदारण्यकस्थम्। प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं बाध्यत्वं वा मिथ्यात्वमभिप्रेत्याह—**नेहेति।** मनसैवेदमाप्तव्यमित्यादि। इह नाना ब्रह्मभिन्नं किमपि नास्तीत्यर्थः। बाध्यत्वं मिथ्यात्वं स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं वा इत्याशयेनाह—**अथात इति।** बाध्यत्वं च न इदमिह नास्तीति प्रमाविषयत्वं, कस्यचित् कचिन्निषेधस्य प्रमितत्वेन सिद्धसाधनात् श्रुतेरनुवादकत्वापत्तेश्च, किन्तु कालिकविशेषणताविशेषेण इदमिदानीं नास्तीति प्रमाविषयत्वम्। तस्य चाज्ञातत्वेन न श्रुतेरनुवादकत्वम्। न च कालिकसम्बन्धेन प्रतियोगित्वमतेनैव सम्बन्धेन कथं तदभाव इति वाच्यम्।

---

१. क१ पुस्तके अत्रद्वयेति शेष इति।
२. तस्मिन्नेव यदा मिथ्यात्वसूचनमिति।
३. खगपुस्तकयोर्मिथ्यात्वमित्यवधेयमिति।
४. खपुस्तके हृदयग्रन्थ्यादेरेवेति।

अभावस्य दैशिकविशेषणता[1]विशेषेण वृत्तेरङ्गीकारेण एकसम्बन्धावस्थितत्वाभावात्[2] । ईश्वरस्यैव कालत्वात् समानसत्ताकत्वाभावेन विरोधाभावाच्च समानसत्ताकयोरेव विरोधात् । ईश्वररूपकालवृत्तिरभावस्तु पारमार्थिकः, प्रतियोगी च व्यावहारिकः । यद्यपि सूर्यक्रियारूपकालोपाधिवृत्तित्वे[3]नाभावस्यापि न पारमार्थिकत्वं तथापि उपाध्यवच्छिन्नेश्वरस्यैव कालोपाधित्वेनाभावस्य पारमार्थिकत्वात्, वस्तुतस्तु प्रतिपन्नोपाधौ नास्तीति प्रतीतिविषयत्वं प्रतिपन्नोपाधौ[4] प्रतियोगिकालातिरिक्तकाले नास्तीतिप्रतीतिविषयत्वं बाध्यत्वमिति दिक् । नापि द्वितीय इत्यत्र हेत्वन्तरमाह—**आत्माध्यस्ततयैवेति** । यदि चात्माध्यस्ततयैवानात्मसिद्धौ(?द्धिः) तत्रात्माध्यासः, अनात्माध्यासेन चात्मनो दोषादिसंभवात्तत्र चानात्माध्यास इति व्याकुरुषे तदात्माश्रयान्योन्याश्रयादिदोष इत्यर्थः । **प्रसङ्गाच्च** इत्यत्र चकारस्तु मिथ्यात्वाभ्युपगमादित्याद्यपेक्षया बोध्यः । **स्वप्रकाशात्मनीति** । आच्छादिकाया इति शेषः । नहि सूर्येऽन्धकारोऽस्तीति कश्चिद्वदतीति भावः । पूर्वोक्तमात्माश्रयादिदोषमप्यापादयति—**कथं नात्माश्रयादीति । अन्त्य इति ।** अनध्यस्तस्य ज्ञाननिवर्त्यत्वाभावश्चेत्यपि बोध्यम् । **सर्वस्येति** । बाधितविषयकत्वं भ्रमत्वं, अबाधितविषयकत्वं च प्रमात्वमिति व्यवस्था न स्यादित्यर्थः । **सौगतेति** । यथा विज्ञानवादिनां सर्वं विज्ञानात्मकं न तदतिरिक्तोऽर्थोऽस्ति तथा त्वन्मतेऽपीत्यर्थः ।

**अत्रोच्यते—अहं मनुष्यः कर्ता भोक्तेत्यादिप्रतीतिस्तावत्सर्वजनसिद्धा । सा च न स्मृतिरपरोक्षावभासत्वाद्भेदाग्रहपूर्वकत्वाच्च । नापि प्रमा श्रुतियुक्तिबाधितत्वात् । तथा च श्रुतयः—'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' (बृ. आ. ४।३।७), 'अयमात्मा ब्रह्म' (सैव. २।५।१९), 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. २।१), 'विज्ञानमानन्दं ब्रह्म' (बृ. आ. ३।९।२८), 'य आत्मा अपहतपाप्मा' (छां. ८।७।१), 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः' (बृ. आ. ३।४।१), 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' (सैव. ३।५।१), 'स यत्तत्र किञ्चित्पश्यति अनन्वागतस्तेन भवति असङ्गो ह्ययं पुरुषः' (सैव. ४।३।१५) इत्याद्या अकर्तृभोक्तृपरमानन्दरूपतामात्मनो दर्शयन्ति । युक्तयश्च—विकारिणः परिच्छिन्नत्वेन अनात्मत्वापत्तेः, स्वेनैव स्वस्य ग्रहणे कर्तृकर्मविरोधात् दृग्दृश्ययोश्च**

---

१. खपुस्तके विशेषता इति ।
२. खगयोरवच्छिन्नत्वाभावादिति ।
३. क१ पुस्तके कालोपाधिवृत्तत्वेनेति ।
४. क१खपुस्तकयोः प्रतिपन्नोपाधीति ।

**सम्बन्धानुपपत्तेः, भेदेनाभेदेन वा धर्मधर्मिभावानुपपत्तेश्च। ज्ञानानित्यत्वपक्षे तत्तद्व्यक्तिभेदध्वंसप्रागभावसमवायज्ञानत्वजात्याद्यभ्युपगमे गौरवात्, एकत्वाभ्युपगमे चातिलाघवात्, घटज्ञानं पटज्ञानमित्युपाधिभेदपुरस्कारेणैव ज्ञानभेदप्रतीतेः। स्वतस्तु ज्ञानं ज्ञानमिति एकस्वरूपावगमात्, तदुत्पत्तिविनाशप्रतीत्योश्चावश्यकल्प्यविषयसम्बन्धविषयतयाप्युपपत्तेः, उपाधिपरामर्शमन्तरेण स्वत एव घटाद्धटान्तरस्य भेदप्रतीतेः तत्प्रतिबन्दीग्रहासम्भवात् आकाशकालदिशामपि नानात्वापत्तेश्च। कर्तृत्वादेर्वास्तवत्वेऽनिर्मोक्षप्रसङ्गात्। स्वप्रकाशानभ्युपगमे च जगदान्ध्यप्रसङ्गात्, परमप्रेमास्पदत्वेन च तस्यानन्दरूपत्वात्, निर्धर्मकनित्यस्वप्रकाशसुखात्मक एवात्मा इत्यादयः।**

नन्वध्यासोपीत्यादिना पूर्वपक्षिणाऽऽक्षिप्तेऽध्यासे सिद्धान्ती समाधत्ते—**अत्रोच्यत इति। भेदाग्रहपूर्वकत्वाच्चेति।** नहि स्मृतौ भेदाग्रहः किन्तु विशिष्टानुभवे, तथाच अपरोक्षानुभव एवेति। अहं मनुष्य इत्यादिप्रत्ययस्य मनुष्यत्वादिबाधिकां बृहदारण्यकादिश्रुतिमाह—**योऽयं विज्ञानमय इत्यादि।** एतत्सर्वस्य पूर्वं कतम आत्मेति बोध्यम्। इयं श्रुतिस्तु ज्योतिर्ब्राह्मणस्था। **अयमात्मा ब्रह्म,** इति श्रुतिस्तु मधुब्राह्मणस्था अपूर्वमनपरमबाह्यमित्याद्या। **विज्ञानमानन्दं ब्रह्म,** इति श्रुतिस्तु शाकल्यब्राह्मणस्था। **रातेर्दातुः परायणम्** (?) इत्यन्तां तैत्तिरीयकश्रुतिमाह—**सत्यमिति।** छान्दोग्यश्रुतिमाह—**य आत्मेति।** विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपास इत्यन्तां उषस्तब्राह्मणस्थामाह—**यत्साक्षादिति।** कर्तृत्वादिबाधिकां कहोलब्राह्मणस्थां श्रुतिमाह—**योऽशनायापिपासे,** इत्यादि। ज्योतिर्ब्राह्मणस्थं वाक्यमाह—**स यत्तत्रेति। अनन्वागतो**ऽननुषक्तः। अहं मनुष्यः कर्तेत्यादिप्रत्ययस्य बाधिकां श्रुतिमुपन्यस्य युक्तिमाह—**युक्तयश्चेति।** सुखात्मक एवात्मेत्यादय इत्यनेनान्वयः। आत्मनः कर्तृत्वादिरूपविकारसत्त्वेन परिच्छिन्नत्वं प्रसाध्यते। नानात्वं साधयति—**विकारिण इति।** इदं तु पूर्वमप्युक्तमभावप्रतियोगिनश्चामीत्यादिना। आत्मनो ज्ञानरूपविकाराङ्गीकारे दूषणमाह—**स्वेनैवेति।** मामहं न जानामीति प्रत्यये एकस्यात्मनः कर्तृत्वं कर्मत्वं च वक्तव्यं तच्च विरुद्धम्। विरोधमेव प्रदर्शयति-(**कर्तृकर्मविरोधादिति।**) तत्र च केचन स्वतन्त्रः कर्ता स्वातन्त्र्यं च तदितरकारकाप्रयोज्यत्वे सति सकलकारकप्रयोक्तृत्वम्, एवं च एकस्यैव कर्तृत्वेन इतरकारकाप्रयोज्यत्वं कर्मत्वेन इतरकारकप्रयोज्यत्वरूपं विरोधमिति वदन्ति। अन्ये तु कर्तुरीप्सिततमत्वेन प्रधानत्वं, क्रियानिष्पादकत्वेन गुण-

त्वम् । तथा च एकस्यैव गुणत्वप्रधानत्वरूपं विरोधं वर्णयन्ति । अपरे तु पाणिनीय-प्रथमाध्यायचतुर्थपादे 'आ कडारादेका संज्ञा' इति प्रथमसूत्रे 'कडाराः कर्मधारय' इत्यतः पूर्वं एका संज्ञा विहिता, एवं च एकसंज्ञाधिकारे एकस्य[1] कथं कर्तृसंज्ञा कर्मसंज्ञा इत्युभयसंज्ञाविधानमिति विरोधमुद्भावयन्ति—**दृग्दृश्यसम्बन्धानुपपत्तेरिति ।** नन्वज्ञानं विषयासम्बन्धमेव प्रकाशकं सर्वेषां जीवानां सार्वज्ञप्रसङ्गात् । नापि सम्बद्धमात्मस्वरूपस्य तद्गुणस्य ज्ञानस्य वा विषयेण सह संयोगसमवायरूपसम्बन्धान्यतराभावात्, ज्ञानेऽध्यस्तो विषय इत्याध्यासिकसम्बन्धानङ्गीकारेऽन्यस्य साक्षाद्विशिष्टप्रतीतिजनकस्य सम्बन्धस्याभावात् । न च विषयविषयिभावरूपोऽस्तु स इति वाच्यम्; तस्य विषयत्वविषयित्वरूपत्वादेकमात्रनिष्ठत्वेन सम्बन्धस्य उभयमात्रनिष्ठतया विशिष्टप्रत्ययजनकत्वक्षतेश्च तस्य दुर्निरूपत्वात् । तथाहि तस्यातिरिक्तत्वेऽपसिद्धान्तात् । अनतिरिक्तत्वे[3] किं ज्ञानजन्यफलाधारकत्वं[4] किंवा ज्ञानजन्यहानादिबुद्धिगोचरत्वम् । तत्र न आद्यः, ज्ञाततारूपतत्फलस्यानङ्गीकारात् अतीतादावभावाच्च । नापि द्वितीयः, गगनादौ तदभावात् महारजतमलादेरपि तज्ज्ञानविषयत्वप्रसङ्गाच्च । एवमन्यदपि बहुविधमाशङ्क्य निराकृतमद्वैतसिद्धौ गुरुचरणैः । तदपि च विवेचितं मया मत्कृतसिद्धिसाधके । नापि ज्ञानविषययोर्विषयिविषयत्वं स्वरूपसम्बन्धस्यासिद्धेः[5] । तथाहि स्वरूपसम्बन्ध इत्यस्य स्वरूपं सम्बन्ध इत्यर्थे संयोगसमवाययोरतिव्याप्तिस्तयोरपि स्वरूपत्वात् । न च संयोगसमवायान्यस्वरूपत्वं, हिमवद्विन्ध्ययोरपि स्वरूपसम्बन्धापत्तेः । अथ सम्बन्धान्तरमन्तरेण विशिष्टप्रतीतिजननयोग्यत्वं स्वरूपसम्बन्ध इति चेत्, न, आत्मानं जानामीत्यत्राव्याप्तेः, तत्र सम्बन्धान्तरस्य समवायस्यैव सत्त्वात्, अतीन्द्रिये आकाशादावव्याप्तेश्च । न हि तस्य विशिष्टप्रतीतिजननयोग्यत्वे मानमस्ति । अन्यथा तेन[6] विशिष्टप्रत्ययजननापत्तेः । किंच विशिष्टप्रतीतिजननयोग्यत्वं धर्मो वा सम्बन्धस्तादृशस्वरूपद्वयमेव वा । आद्ये स्वरूपस्य सम्बन्धत्वव्याघातः प्रतीतिघटितस्य चाक्षुषादिज्ञानगोचरत्वप्रसङ्गश्च । न द्वितीयः अननुगमात् । किंच स्वरूपस्य सम्बन्धत्वे घटाभावप्रमाद्यनुपपत्तिः[7] । अभावभ्रमस्थले[8] घटतदभावयोरन्यतरस्य स्वरूप-

---

१. गपुस्तके एवं च एकस्य कथमिति ।
२. खगपुस्तकयोर्विषयत्व इति ।
३. तयोरेवानतिरिक्तत्वेऽपीति ।
४. क१ पुस्तके फलाधायकत्वमिति पाठः स न युक्तः ।
५. तस्मिन्नेव स्वरूपसम्बन्धविशेषासिद्धेरिति ।
६. खगयोरन्यथा तेनेति पाठस्सोऽनुपपन्नः ।
७. खपुस्तके घटाभावभ्रमाद्यनुपपत्तिरिति ।
८. खगयोरभावभ्रमस्थलेऽपीति पाठः ।

सम्बन्धस्य सत्त्वेन विशिष्टप्रमासम्भवात् । न च सम्बन्धान्तरमन्तरेण[1] विशिष्टप्रमाजननयोग्यत्वं वक्तव्यम् । वास्तवसम्बन्धसत्त्वेन विशिष्टप्रमात्वस्याप्यापाद्यत्वात्[2] । अन्यथा तत्र तस्याप्रमात्वे सम्बन्धाभावः, सम्बन्धाभावे च तस्याप्रमात्वं इत्यन्योन्याश्रयात् । किंच ज्ञानस्याभावः ज्ञातोऽभावः इति प्रतीत्योर्वैलक्षण्यं[3] न स्यात् । ज्ञानाभावयोरेवोभयत्र स्वरूपसम्बन्धत्वे विषयकृतविशेषाभावात् । तस्मात् सुष्ठूक्तं अध्यासं विना दृग्दृश्यसम्बन्धानुपपत्तेरिति दिक् । **भेदेनेति** । अत्यन्तभेदे गौरश्व इत्यादौ धर्मधर्मिभावानुपपत्तिः । एवमत्यन्ताभेदेऽपि घटस्य धर्मधर्मिभाव इत्यर्थः । अहं मनुष्यः कर्तेत्यादिप्रतीतिबाधिकां युक्तिमुपन्यस्य ज्ञाननित्यत्वसाधनोपयोगितया ज्ञानानित्यत्वं दूषयति—**ज्ञानानित्यत्वपक्ष इति** । ननु ज्ञानानित्यत्वपक्षे एकपुरुषीयज्ञानेऽपि निर्वाहो नास्तीति एकस्मिन्नष्टेऽन्येषामनुत्पादात्[4] किमुत बहुपुरुषीयज्ञाने इत्याशयेनाह—**तत्तद्व्यक्तिभेदेति** । ज्ञाननित्यत्वपक्षे उक्तदोषाभाव इत्याह—**एकत्वाभ्युपगमे इति** । ज्ञानैक्यपक्षे अस्माज्ज्ञानादिदं ज्ञानं भिन्नमित्यत्र का गतिरित्यत आह—**घटज्ञानमिति** । अत्र चैतद्भेदत्वं[5] घटविषयत्वादिकमेवेति न उक्तदोष इति भावः । नन्वेवमपि ज्ञानोत्पत्तिविनाशयोः का गतिरित्यत आह—**तदुत्पत्तीति** । ककारो नष्ट इति प्रत्ययस्य यथा वायुसंयोगनाशविषयकत्वं, यथा वा स्वर्गी नष्ट[6] इति प्रत्ययस्य स्वर्गसम्बन्धनाशविषयकत्वं,[7] यथा वा दण्डपुरुषोभयसत्त्वे दण्डी नष्ट इति प्रत्ययस्य एतदुभयसंयोगध्वंसविषयकत्वं, यथा वा अहं विद्वान् जातः, घटाकाश उत्पन्नः, कूपाकाश उत्पन्नः, घटाकाशो नष्टः, कूपाकाशो नष्ट इति प्रत्ययस्य न आत्माकाशादिविषयकत्वं अपि तु विद्याघटादिविषयकत्वं, तथा ज्ञानं नष्टमिति प्रत्ययस्य न ज्ञानविषयत्वं किन्तु तदुभययोः सम्बन्धविषयकत्वमित्यर्थः । अन्यविषयकप्रत्ययस्यान्यविषयकत्वं सर्ववादिसिद्धं, तच्चाधस्तात् प्रदर्शितम् । न च घटाकारावृत्तिरेव ज्ञानं तस्य विनाशित्वेन[8] कथं तदपलाप इति वाच्यं, विषयात्मरूपज्ञानयोः सम्बन्धरूपा वृत्तिर्न तु ज्ञानं, ज्ञानस्य नित्यस्वरूपत्वसुखस्वरूपत्वादिकं तु

---

१. सम्बन्धान्तरेण इति गपुस्तके ।

२. क१ पुस्तके विशिष्टप्रमासंभवादिति ।

३. खपुस्तके कुतोऽभाव इत्यभाव इति पाठः स न युक्तः । गपुस्तके ज्ञानस्याभावः प्रतीत्योर्वैलक्ष्ण्यमिति स नार्थबोधकः ।

४. खगयोरन्येषामुत्पादादिति पाठस्सोऽनुपपन्नः ।

५. क१ खयोरत्र चैतन्यत्वमिति ।

६. गपुस्तके स्वर्गो नष्ट इति ।

७. क१ पुस्तके स्वर्गविषयकत्वमिति ।

८. गपुस्तके विनाशित्वे चेति ।

तद्विरुद्धं नित्यं विज्ञानमानन्दं ब्रह्मेत्यादिश्रुतिप्रसिद्धं गुरुचरणप्रदर्शितयुक्तिविरुद्धं च। न च तवापि शास्त्रे वृत्तौ ज्ञानपदप्रयोगो दृश्यत इति वाच्यं, वृत्त्यवच्छिन्नचैतन्ये ज्ञानपदप्रयोगात् न तु केवलवृत्तौ, असम्बद्धस्य भासकत्वे तवातिप्रसङ्गवत् ममाप्यतिप्रसङ्गात्। एवं ज्ञानविषययोः सम्बन्धो वक्तव्यः। स चास्मन्मते वृत्तिः, परेषां तु पदार्थान्तरम्। उक्तं च नव्यैरपि विषयत्वाद्योऽप्यतिरिक्ता एव पदार्था इति दिक्। तर्हि घटादेरपि भेदो न स्यात् तत्राह—**उपाधीति**। यद्यौपाधिकभेदेन वस्तुभेदः साध्यते तर्ह्यतिप्रसङ्ग इत्याह—**आकाशेति**। अहं मनुष्यः कर्तेत्यत्र यदि कर्तृत्वं वास्तवं तत्र दूषणमाह—**कर्तृत्वादेरिति**। तदुक्तं वार्तिककारपादैः—

'आत्मा कर्त्रादिरूपश्चेन्माकाङ्क्षीस्तर्हि मुक्तताम्।
नहि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेः' ॥ इति ॥

'हर्षशोकभयक्रोध'इत्यादिना 'कुर्वन्त्यचेतनाः कर्म' इत्यादिना चात्मनः कर्तृत्वादिकं वास्तवं नास्तीत्यावेदितमधस्तादिति। 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुत्या सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यमिति विवरणेन च सर्वं चैतन्यभास्यमित्युक्तम्। तच्च तस्य जडत्वे न संभवति इत्याह—**स्वप्रकाशेति। आन्ध्यप्रसङ्गादिति**। अप्रकाशप्रसङ्गादित्यर्थः। आनन्दरूपत्वं साधयति—**परमेति**। अत्रार्थे भागवतस्मृतिरपि प्रमाणम्—

'स वै प्रियतमश्चात्मा यतो न भयमण्वपि।
इति वेद स वै विद्वान् यो विद्वान् स गुरुर्हरिः' ॥ इति ॥

**तस्मात्परिशेषाद्भ्रान्तिरियमिति स्थिते तत्कारणमपि योग्यं किञ्चित्कल्पनीयम्। कल्प्यमानं च तदात्मन्यध्यस्ततयैव धर्मिग्राहकमानेन सिध्यतीति न जानामीति साक्षिप्रतीतिसिद्धमनिर्वाच्यमज्ञानमेव तत्। न चेदमभावरूपम्, ज्ञानस्य नित्यत्वेन तदभावानुपपत्तेरुक्तत्वात्[1]। धर्मिप्रतियोगिज्ञानाज्ञानाभ्यां च व्याघातापत्तेः। नापि भ्रमसंशयतत्संस्कारपरम्परारूपम्, अपरोक्षत्वात्, अतीतानागतभ्रमसंशयतत्संस्काराणां चापरोक्षत्वेन ज्ञातुमशक्यत्वात्, आवरणात्मकत्वात्, भ्रमाद्युत्पादनत्वाच्च। आत्मनो निर्विकारत्वात्, अन्तःकरणादेश्च तज्जन्यत्वात्, 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' (श्वे. १।३) इति गुणवत्त्वश्रुतेश्च, 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (सैव. ४।१०), 'इन्द्रो मायाभिः पुरुरूप ईयते' (बृ. आ.**

१. खगपुस्तकयोस्तदभावानुपपत्तिरित्युक्तत्वादिति।

२।८।१९), 'अनृतेन हि प्रत्यूढाः' (छां. ८।३।२), 'नीहारेण प्रावृताः' (तै. स. ४।६।२।२), 'भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे. १।१०) इत्यादिश्रुतेश्च मायाऽविद्यानिर्वाच्यमनृतं[1] तत्त्वज्ञाननिवर्त्यश्चाज्ञानमेव स्वपराध्यासे कारणम्। न चात्माश्रयादिदोषप्रसङ्गः, अनादित्वेन तन्निरासात्, अनादित्वेनोत्पत्त्यभावात्, स्वप्रकाशात्मन एव तज्ज्ञप्तिरूपत्वात्।

तस्माद्भ्रान्तिरिति। अहं मनुष्यः कर्ता भोक्तेत्यादिप्रतीतिर्भ्रान्तिरित्यर्थः। साधकमाह—न जानामीति। ज्ञानस्येति। ज्ञानस्य नित्यत्वेन त्रिविधपरिच्छेदशून्यत्वं तथा च कथं तदभाव इत्यर्थः। तुष्यतु दुर्जनं[2] इति न्यायेन परमतमवलम्ब्य घस्स्वभावस्तथापि न त्वदिष्टसिद्धिरित्याह—धर्मीत्यादि। मयि घटज्ञानं नास्ति ज्ञानं नास्तीति वा वक्तव्यम्। उभयथाप्ययं सामान्याभावः। स च यत्किञ्चित्प्रतियोगिसत्त्वविरोधी। यदि च प्रतियोगिनो घटज्ञानस्य ज्ञानमस्ति तर्हि ज्ञानस्य विषयविषयकत्वनियमे[3] नास्ति घटज्ञानरूपं प्रतियोगि, कुतस्तदभावः। सामान्याभावरूपविषयाभावाच्च न तस्य ज्ञानम्। यदि च न प्रतियोगिज्ञानं तदा सुतरामेव न अभावज्ञानं प्रतियोगिज्ञानरूपकारणाभावात्। एवं ज्ञानं नास्तीत्यत्रापि यदि धर्मिप्रतियोगि ज्ञानं तदाज्ञानमस्ति। न तत्सामान्याभावस्तथा च कुतस्तस्य ज्ञानम्। न हि विषयाभावे ज्ञानं जायते, जायमानं वा प्रमा अप्रमा च न स्वविषयसाधकम्। यदि च न ज्ञानरूपस्य प्रतियोगिनो ज्ञानं, तदा न सुतरां तदभावज्ञानं प्रतियोगिज्ञानरूपकारणाभावादित्यर्थः। संस्कारस्यातीन्द्रियत्वमित्यभिप्रेत्याह—अपरोक्षत्वादिति। भ्रमादीनामप्यपरोक्षत्वे बाधकमाह—अतीतेति। आवरणात्मकत्वादिति। 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव' इत्याद्याः स्मृतयो भावरूपाज्ञानस्य ज्ञानस्वरूपात्मन आवरणकत्वे प्रमाणम्। वृत्तिज्ञानस्याज्ञानावृतत्वं नोक्तिसम्भवं, अभावस्य चावरकत्वं न दृष्टं न श्रुतमित्याशयः। भ्रमसंशयादीनामपि भावकार्यत्वेन उपादानं वक्तव्यं, तदपि च विवक्षितविवेकेनाज्ञानमेवेत्याह—भ्रमेति। तथा चागतं भ्रमाद्यतिरिक्ताज्ञानेन, स्वस्य स्वानुपादानत्वादित्याशयः। आत्मान्तःकरणं वा उपादानमस्तु तत्राद्यमभिप्रेत्याह—आत्मन इति। अन्त्यमभिप्रेत्याह—अन्तःकरणादेरिति। तस्याप्यनिर्वचनीयस्य जन्यत्वेनोपादानगवेषणायामज्ञानमेव पर्यवसितमिति[4] भावः। श्वेता-

१. कपुस्तके मायाऽविद्याऽनिर्वाच्यमिति।
२. खगयोस्तुष्यतु सुजन इति पाठः स न युक्तः।
३. गपुस्तके विषयिविषयकत्वनियमे इति।
४. अज्ञानमेव तदुपादानं पर्यवसितमिति खपुस्तके।

श्वतरप्रथमाध्यायस्थं वाक्यमुदाहरति—**देवेति**। इतः पूर्ववाक्यं, 'ते ध्यानयोगानुगता अपश्यन्' इति। 'स्वगुणैर्निगूढाम्' इत्यनेन गुणवत्त्वश्रुतेर्नाभाव इति भावः। तत्रैव चतुर्थाध्याये **मायां त्विति**। **विद्यादित्यनन्तरं** 'मायिनं तु महेश्वरम्' इति बोध्यम्। इतः पूर्ववाक्यं,

छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति।
अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः॥ इत्यन्तम्॥

बृहदारण्यकवाक्यमुदाहरति—**इन्द्र इति**। छान्दोग्यदशमाध्यायीयां श्रुतिमुदाहरति—**अनृतेति**। एतस्य पूर्ववाक्यं, 'तद्यथा हिरण्यं निधिनिहितं क्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति'। तत्र हेतुमाह—**अनृतेन हि प्रत्यूढा इति**। असत्येनाच्छादिता इत्यर्थः। वाजसनेयिसंहितायाः स्वप्राध्यायस्थकण्डिकावृत्तिवाक्यमाह[1]—**नीहारेणेति**। तद्यथा कण्डिकाः—

न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति॥ इति॥

श्वेताश्वतरस्थप्रथमाध्यायवाक्यमुदाहरति—**भूय इति**। एतस्य पूर्ववाक्यम्–'तस्याभिध्यानाद्योजनात्तत्त्वभावात्' इत्यन्तम्। नन्वविद्याध्यासे सैवाविद्या चेत् कारणं तर्हि आत्माश्रयः। अन्याविद्या चेदेतदविद्याध्यासे कारणं तर्हि अन्योन्याश्रयः, तदध्याससिद्धौ एतदध्यासः, तदध्याससिद्धौ च तदध्यास इत्याशङ्क्याह—**न चेति**। ननु उत्पत्तौ आत्माश्रयः ज्ञप्तौ वा। नाद्य इत्याह—**अनादित्वेनेति**। नान्त्य इत्याह—**स्वप्रकाशेति**।

**तेनाज्ञानाध्यासः, तद्विशिष्टे चैतन्येऽहङ्काराध्यासः, तद्विशिष्टे च कामसङ्कल्पादीनामहङ्कारधर्माणामिन्द्रियधर्माणां च काणत्वबधिरत्वादीनामध्यासः[2]। इन्द्रियाणां तु परोक्षत्वान्नापरोक्षधर्म्यध्यास इति सिद्धान्तः। तद्विशिष्टे च स्थूलदेहाध्यासः, धर्मिपुरस्कारेणैव[3]ाहं मनुष्य इत्याकारः, न तु स्वरूपतोऽहं देह इत्यध्यासः, तथा**

---

१. एतद्वाक्यं तैत्तिरीयसंहितायामपि वर्तते। तत्र 'न तं विदाथ य इदं जजानान्यद्युष्माकमन्तरं भवाति' इति पाठान्तरं, अन्ते च 'परो दिवा पर एना' इति विशेषः।

२. खगपुस्तकयोस्तद्विशिष्टे च कामसङ्कल्पादीनामहङ्कारधर्माणामध्यासः। तद्विशिष्टे चेन्द्रियधर्माणां काणत्वबधिरत्वादीनामध्यास इति।

३. तस्मिन्नेव धर्मपुरस्कारेणैवेति।

प्रतीत्यभावात्। तद्विशिष्टे च स्थौल्यादीनां देहधर्माणामध्यासः। तद्विशिष्टे बाह्यानां पुत्रभार्यादीनां साकल्यवैकल्यादिधर्माध्यासः। एवं चैतन्यस्यापि अहङ्कारादिषु देहपर्यन्तेष्वध्यासः संसर्गतः। अध्यासव्यवधानतारतम्याच्च[1] प्रेमतारतम्यम्। तदुक्तं वार्तिकामृते (बृ. आ. भा. वा. १।४।१०३१)—

वित्तात्पुत्रः प्रियः पुत्रात्पिण्डः पिण्डात्तथेन्द्रियम्।
इन्द्रियेभ्यः प्रियः प्राणः प्राणादात्मा परः प्रियः॥ इति॥

पिण्डः स्थूलशरीरम्, प्राणोऽन्तःकरणम्। देहापेक्षया चेन्द्रियाणां प्रियत्वं शस्त्रवृष्ट्यादिधारापाते चक्षुषो निमीलनदर्शनादनुभवसिद्धम्। तेनान्योन्याध्यासाच्चिदचिद्ग्रन्थिरूपोऽध्यासः। एकतरस्याध्यासाङ्गीकारेऽन्यतरस्याभानप्रसङ्गात्, अध्यस्तस्यैव भ्रमे भाननियमात् (सं. शा. १. ३६) 'इमे रङ्गरजते' इति समूहालम्बनभ्रमवद्वद्वयमितरेतराध्यासः। सर्वबाधावधिभूतचैतन्यपरिशेषेण च न शून्यवादापत्तिः, सत्यानृतसंभेदावभासत्वादध्यासस्य। तस्मात्पूर्वपूर्वाध्यासमूल एवायमुत्तरोत्तरोऽहङ्काराद्यध्यासो बीजाङ्कुरवदनादिः। अविद्याध्यासश्च एक एवानादिः।

एवमज्ञानाध्याससिद्धौ कुत्र कुत्र कस्याध्यास इति शिष्याकाङ्क्षायां तं तमध्यासं संकलय्य[2] दर्शयति—**तेनेति**। अज्ञानाध्यासस्यानादित्वात् प्राथम्येनेत्यर्थः। अहङ्काराध्यासवदिन्द्रियाध्यासः किमिति नोक्तस्तत्राह—**इन्द्रियाणां त्विति**। नेत्यत्र हेतुमाह—**तथेति**[3]। **साकल्यवैकल्ये** संपत्तिविपत्ती। चैतन्येऽहङ्काराद्यध्यासमुक्त्वा अहङ्कारादौ चैतन्याध्यासमाह—**एवमिति**। **संसर्गत इति**। यथाहङ्कारादीनां स्वरूपतोऽध्यासस्तथा न किन्तु चैतन्यस्य संसर्गतः। अनात्मवच्चैतन्यस्यापि स्वरूपत अध्यासे अनात्मवच्चैतन्यस्यापि मिथ्यात्वप्रसङ्गाच्छून्यवादप्रसङ्ग इत्यर्थः। संसर्गत इति षष्ठ्यर्थे तसिः, सार्वविभक्तिकस्तसिलिति[4] सूत्रेण। एवं संसर्गस्येत्यर्थः। अन्यथा संसर्गित्वेनाप्यध्यासे शून्यवादतादवस्थ्यमिति भावः। सर्वस्य प्रेयात्मा[5]ध्यासत्वे

१. तस्मिन्नेव देहपर्यन्तेष्वध्यास इत्यनन्तरं संसर्गतोऽध्यासस्तद्व्यवधानतारतम्यादिति पाठस्स न समञ्जसः।
२. सकलमपि इति गपुस्तके पाठस्सोऽनुपपन्नः।
३. खपुस्तके नन्विलत्र हेतुमाह-अहं देह इति।
४. गपुस्तके सर्वविभक्तिभ्यस्तसिल् इति।
५. सर्वस्य प्रियात्मा इति तस्मिन्नेव।

प्रेमतारतम्यं कुत इत्याह—**अध्यास इति**। पुत्रादिपिण्ड इत्यादि। प्रिय इत्यनेनान्वयः। **इन्द्रियमिति**। प्रियमिति शेषः। उपसंहरति—**तेनेति**। हेतुमाह—**एकतरस्येति**। अभानप्रसङ्गे हेतुमाह—**अध्यस्तस्यैवेति**। 'अध्यस्तमेव हि परिस्फुरति भ्रमेषु, नान्यत्कथंचन परिस्फुरति भ्रमेषु' इत्यादिना संक्षेपशारीरकाचार्यैरुक्तत्वात्। एवं च देहपर्यन्तेष्वेव चैतन्याध्यासो नान्यत्रेति भावः। ननु जडचैतन्ययोरुभयोरध्यस्तत्वे शून्यवादापत्तिरत आह—**सर्वबाधेति**। चैतन्यसंसर्गाध्यासेऽपि न स्वरूपतोऽध्यासो यतः शून्यवादापत्तिरित्यर्थः। ननु, ज्ञातस्यैवाध्यासः, तथा च अहङ्काराध्यासात्पूर्वं तस्य ज्ञातत्वाभावात्कथमध्यास इत्याशङ्कामुपसंहारव्याजेन परिहरति—**तस्मादिति**। अनादौ संसारे पूर्वं पूर्वं ज्ञातानामहङ्काराणामुत्तरोत्तरत्राध्यासस्तस्य च प्रवाहानादितयैवानादित्वमित्यर्थः।

**नन्वध्यासस्यानादित्वे 'स्मृतिरूपः परत्र पूर्वदृष्टावभासोऽध्यास' (शा. भा. १७-१८) इति वदता भाष्यकारेण स्मृतिरूपत्वेन संस्कारजन्यत्वमुक्तं विरुध्येत इति चेत्, न, कार्याध्यासाभिप्रायत्वात्तस्य, परत्र परावभास इत्येतावन्मात्रस्यैव उभयानुगतस्य लक्षणत्वात्। यद्वा 'सत्यानृते मिथुनीकृत्य' (तदेव. १६) इति भाष्यकारवचनात्सत्यमिथ्यावस्तुसंभेदावभासोऽध्यास इत्येव सिद्धान्तलक्षणम्। तेन कारणाध्यासेऽपि न लक्षणाव्याप्तिः। कार्याध्यासस्य च प्रवाहरूपेण बीजाङ्कुरवदनादित्वाभिधानान्न कोऽपि दोषः।**

नन्वेवमपि अध्यासलक्षणे[1] भाष्यविरोधमाशङ्कते—**नन्विति**। स्मृतिरूपपदं व्याचष्टे—**स्मृतिरूपत्वेनेति**। इत्थंभूतलक्षणे तृतीया। एवं च स्मृतेः रूपमिव रूपमस्येति व्युत्पत्त्या स्मृतिसदृशत्वं प्राप्तं तच्च संस्कारजन्यत्वमित्यर्थः। नेदमविद्याध्याससाधारणं लक्षणं, अपि तु पञ्चभूतादिरूपकार्याध्यासस्येत्याह—**कार्याध्यासाभिप्रायत्वात्तस्येति**। इदं तु लक्षणमध्यस्यत इत्यध्यास इति व्युत्पत्त्या अर्थाध्यासस्य, अध्यसनमध्यास इति व्युत्पत्त्या ज्ञानाध्यासस्य, इति विवेकः। नन्विदमयुक्तं सामान्यलक्षणाभावात् विशेषलक्षणस्य तत्पूर्वकत्वात् तत्राह—**परत्रेति**।

**एवमध्यासे सिद्धे एकस्याप्यात्मनो जीवेश्वरादिव्यवस्था मानमेयादिप्रतिकर्मव्यवस्था चोपपद्यते। तथाहि—अज्ञानोपहित आत्मा अज्ञानतादात्म्यापन्नः स्वचिदाभासाविवेकादन्तर्यामी साक्षी जगत्का-**

---

१. अर्थाध्यासलक्षणेन भाष्येण विरोध इत्याशङ्कत इति गपुस्तके पाठः।

रणमिति च कथ्यते[1], बुद्ध्युपहितश्च तत्तादात्म्यापन्नः स्वचिदाभासाविवेकाज्जीवः कर्ता भोक्ता प्रमातेति च कथ्यत इति वार्तिककारपादाः। प्रतिदेहं बुद्धीनां च भिन्नत्वात् तद्गतचिदाभासभेदेन तदविविक्तं चैतन्यमपि भिन्नमिव प्रतीयते। अज्ञानस्य तु सर्वत्राभिन्नत्वात्तद्गतचिदाभासभेदाभावात् तदविविक्तसाक्षिचैतन्यस्य न कदाचिदपि भेदभानमिति।

अध्याससाधनफलमाह—**एवमिति**। मानमन्तःकरणवृत्त्यवच्छिन्नं चैतन्यम्। मेयं घटाद्यवच्छिन्नं चैतन्यम्। चिदुपहितस्येश्वरोपजीव्यत्वेन प्रथमतोऽज्ञानोपहितस्येश्वरस्य स्वरूपलक्षणमाह—**अज्ञानोपहित इति**। अज्ञानोपहितो य आत्मा स एवात्माज्ञानतादात्म्यापन्नो यः स्वचिदाभासः स्वस्य अज्ञानोपहितो यश्चिदाभासस्तदविवेकात्तदगृहीतभेदकः सन्नन्तर्यामीत्यादिरुच्यत इत्यर्थः[2]। **अन्तर्यामीति**। 'यः पृथिव्यां तिष्ठन् पृथिवीमन्तरो यमयति' इत्यादिना अन्तर्नियमनशील उक्त इत्यर्थः। **साक्षी** सर्वद्रष्टा। ईश्वरं निरूप्य जीवं निरूपयति—**बुद्ध्युपहितश्चेति**। पूर्वोक्तेनात्मनानुषङ्गः। **तत्तादात्म्यापन्नो** बुद्धितादात्म्यापन्नः। जीवस्य प्रमातृत्वमधिककञ्चुकप्रवेशादित्यवधेयम्। तर्हि जीवभेदः कथं तत्राह—**प्रतिदेहं चेति**। तर्हि जीवभेदवत् साक्षिभेदोऽपि स्यात् तत्राह—**अज्ञानस्य त्विति**।

अस्मिंश्च पक्षे तत्त्वमादिपदे[3] जहल्लक्षणैव, साभासस्योपाधेर्वाच्यार्थांशस्य हानादाभासस्यापि जडाजडविलक्षणत्वेनानिर्वचनीयत्वात्। तदुक्तं सङ्क्षेपशारीरके (१-३६)—

साभासाज्ञानवाची यदि भवति पुनर्ब्रह्मशब्दस्तथाहं
शब्दोऽहङ्कारवाची भवति तु जहती लक्षणा तत्र पक्षे[4]। इति।

न चाभासस्यैव बद्धत्वात्केवलचैतन्यस्य च मुक्तत्वाद्बन्धमोक्षयोर्वैयधिकरण्यं स्वनाशार्थं प्रवृत्त्यनुपपत्तिश्चेति वाच्यम्, केवलचैतन्यस्यैवाभासद्वारा बद्धत्वाभ्युपगमात्, तदुक्तं वार्तिककारपादैः—

अयमेव हि नोऽनर्थो यत्संसार्यात्मदर्शनम्। (बृ. आ. भा. वा. २।४।१३८) इति[5]।

१. कपुस्तके जगत्कारणमिति च कथ्यते इति वार्तिककृतः इति।
२. खगपुस्तकयोः स्वस्य अज्ञानोपहितस्यात्मनो यश्चिदाभास इति।
३. खगपुस्तकयोस्तत्त्वस्यादिपद इति पाठस्सोऽनुपपन्नस्तत्त्वमसीत्येतस्य वाक्यत्वात्।
४. अस्य श्लोकस्य उत्तरार्धः—नौरेषा रौति लोहं दहति विषधरो रज्जुरमे तवास्तित्यत्रैवात्मवस्तुन्यपि भवतु जहल्लक्षणा को विरोध इति।
५. अस्य पूर्वार्धः—संसर्गात्मनि दृष्टेऽपि न च किञ्चित्प्रयोजनमिति।

**तेन शुद्धचैतन्यस्याभास एव बन्धः, तन्निवृत्तिश्च मोक्ष इति न किञ्चिदसमञ्जसम्। अथवाऽऽभासाविविक्तं चैतन्यमपि तत्त्वमादिपद्वाच्यम्। तेन वाच्यैकदेशस्यात्यागादस्मिन्पक्षे जहदजहल्लक्षणैवेति न कोऽपि दोषः। अयमेव पक्ष आभासवाद इति गीयते।**

विनाशिनः साभासस्योपाधेस्त्वंपदवाच्यार्थत्वे समागता[1] जहल्लक्षणेत्याशङ्क्य इष्टापत्त्या परिहरति—**अस्मिंश्चेति**। भवत्वाभास एव वाच्यार्थस्तत्राह—**आभासस्यापीति**। आभासस्यैवेति बुद्धितादात्म्यापन्नचिदाभासस्यैव जीवत्वेन बद्धत्वादित्यर्थः। ननु, प्रपञ्चवदाभासस्यानिर्वचनीयत्वेन ज्ञाननाश्यत्वमेवं च स्वनाशस्याप्युद्देश्यत्वं वाच्यं तच्चानुपपन्नम्। तथाहि[2]—आत्माऽपि दुःखहेतुत्वात्[3] निर्वर्तयितव्य इति विज्ञानवादिवदास्तिकोऽपि न स्वनाशार्थं प्रवर्तेत इत्याह—**स्वनाशार्थमिति**। **संसार्यात्मदर्शनमिति**। संसारित्वेन आत्मदर्शनमित्यर्थः। आभास एव तत्त्वंपदवाच्य इति मतं समर्थ्य आभासानतिरिक्तं चैतन्यं तत्त्वंपदवाच्यमिति मतं समर्थयति—**अथवेति**।

**अज्ञानोपहितं बिम्बचैतन्यमीश्वरः, अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानप्रतिबिम्बितं चैतन्यं जीवः[4], इति विवरणकाराः। अज्ञानप्रतिबिम्बितं चैतन्यमीश्वरः, बुद्धिप्रतिबिम्बितं चैतन्यं जीवः, अज्ञानोपहितं तु बिम्बचैतन्यं शुद्धमिति सङ्क्षेपशारीरककाराः। अनयोश्च पक्षयोः बुद्धिभेदाज्जीवनानात्वम्। प्रतिबिम्बस्य च पारमार्थिकत्वाज्जहल्लक्षणैव तत्त्वमादिपदेषु। इममेव प्रतिबिम्बवादमाचक्षते।**

एकाविद्यापक्षेऽपि जीवेश्वरभेदो जीवनानात्वं चेत्यभिप्रेत्याह—**अज्ञानोपहितमित्यादि**। बिम्बचैतन्यमित्यत्र बिम्बपदं स्वरूपकथनार्थम्। अन्तःकरणसंस्कारावच्छिन्न इत्यज्ञानविशेषणम्। जीवनानात्वस्य सुषुप्तौ जीवनाशाभावस्य च सम्पादनायां अन्तःकरणावच्छिन्नस्य जीवत्वे 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वर' इति श्रुतिः प्रमाणम्। भगवद्भाष्यकारवचनम्—'अन्तःकरणसम्भिन्नबोधः स त्वंपदाभिध' इत्यादि। उक्तोभयपक्षे जीवनानात्वमुपपादयति—**अनयोरिति**[5]।

१. गपुस्तके तदागता इति पाठस्सोऽनुपपन्नः।
२. खगयोर्नहीति।
३. तयोरेव दुःखहेतुरिति।
४. खगपुस्तकयोरन्तःकरण......जीवः इत्यनन्तरं अज्ञानानुपहितं बिम्बचैतन्यं तु शुद्धमिति विवरणकाराः इति वाक्यं दृश्यते।
५. गपुस्तके अज्ञानभेदाज्जीवनानात्वं कुतस्तत्राह-अनयोरित्येतादृशः पाठः।

**अज्ञानविषयीभूतं[1] चैतन्यमीश्वरः, अज्ञानाश्रयीभूतं च जीव इति वाचस्पतिमिश्राः। अस्मिंश्च पक्षे अज्ञाननानात्वाज्जीवनानात्वम्। प्रतिजीवं च प्रपञ्चभेदः, जीवस्यैव स्वाज्ञानोपहिततया जगदुपादानत्वात्। प्रत्यभिज्ञा च अतिसादृश्यात्[2]। ईश्वरस्य च सप्रपञ्चजीवाविद्याधिष्ठानत्वेन[3] कारणत्वोपचारादिति। अयमेव चावच्छेदवादः।**

परज्ञानेच्छादिवत् पराविद्यायाः परप्रत्यक्षत्वाभावेन परप्रत्यक्षत्वाभावादाह—**प्रतिजीवं चेति**। अत्र केचन पराविद्याकल्पितत्वं स्वाप्रत्यक्षे तन्त्रं न किन्तु स्वाविद्याकल्पितत्वं स्वप्रत्यक्षे तन्त्रम्। तथा च यावतां पुरुषाणां यद्वस्तु प्रत्यक्षं तावतामविद्याभिरेव तदारब्धम्। न चैकस्य मोक्षे तदविद्यानाशात्तत्प्रपञ्चनाशेन पुनः प्रपञ्चप्रत्यक्षानुपपत्तिरिति वाच्यम्। खण्डघटवत्[4]पुनरुत्पत्तेश्च चरमस्मरणस्य संस्कारनाशकत्ववद्वा चरमाविद्यानाशस्यैव तन्नाशकत्वकल्पनेन त्वदुक्तदोषाभावात्। एवं सर्वसामञ्जस्येऽनन्तकोटिप्रपञ्चकल्पनं स्वभिन्नत्वे सति स्वगतभूयोधर्मवत्त्वरूपेण सादृश्येन प्रत्यभिज्ञासमर्थनं नातिरमणीयमिति वदन्ति। 'पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रम्' इत्यादि श्रुत्यनुसारेणाह—**जीवस्यैवेति**। **प्रत्यभिज्ञेति**। यज्ञदत्तेन यो घटो दृष्टः स एवायं मया विष्णुमित्रेण दृश्यत इत्यादिरूपा इत्यर्थः। तर्हि ईश्वरस्य कारणव्यपदेशः कथं तत्राह—**ईश्वरस्येति**।

**अज्ञानोपहितं बिम्बचैतन्यमीश्वरः, अज्ञानप्रतिबिम्बितं चैतन्यं जीव इति वा, अज्ञानानुपहितं शुद्धचैतन्यमीश्वरः, अज्ञानोपहितं जीव इति वा, मुख्यो वेदान्तसिद्धान्त एकजीववादाख्यः। इममेव च दृष्टिसृष्टिवादमाचक्षते। अस्मिंश्च पक्षे जीव एव स्वाज्ञानवशाज्जगदुपादानं निमित्तं च, दृश्यं च सर्वं प्रातीतिकम्। देहभेदाच्च जीवभेदभ्रान्तिः। एकस्यैव च स्वकल्पितगुरुशास्त्राद्युपबृंहितश्रवणमननादिदार्ढ्यादात्मसाक्षात्कारे सति मोक्षः। शुकादीनां मोक्षश्रवणं चार्थवाद एव। महावाक्ये च तत्पदमनन्तसत्यादिपदवदज्ञानानुपहितचैतन्यस्य लक्षणयोपस्थापकमित्याद्या अवान्तरभेदाः स्वयमूहनीयाः।**

एकजीववादे द्वितीयं मतमाह—**अज्ञानोपहितमिति**। ननु जीवस्यैकत्वे

---

१. कपुस्तके अज्ञानविषयीकृतमिति।

२. तस्मिन्नेव प्रत्यभिज्ञा च सादृश्यादिति।

३. तत्रैव ईश्वरस्य च प्रपञ्चजीवाविद्याधिष्ठानत्वेनेति।

४. क१पुस्तके खण्डपटवदिति पाठः।

गुरुशिष्यभावः कथं एकस्यैव श्रवणादिना मोक्षः स्यादित्याशया[1] बहूनां श्रवणादौ प्रवृत्तिश्च न स्यादित्याशङ्क्याह—**एकस्यैवेति**। स्वप्ने यथा गुरुशिष्यभावकल्पनया व्यवहारस्तथा जागरणेऽपि। यथा वा स्वप्ने एकस्य नानात्वकल्पनया क्रीडा तथा श्रवणादौ प्रवृत्तिः। नित्यमुक्तानन्तकोटिब्रह्माण्डेश्वरश्रीकृष्णसौभरिप्रभृतीनां यथा कायव्यूहेन धर्मादौ प्रवृत्तिः तथा श्रवणादौ प्रवृत्तिः शीघ्रमोक्षार्थम्। न च जीवस्यैक्ये कथं बहूनां प्रवृत्तिरिति शङ्का। अस्मन्मते 'कामः सङ्कल्पो विचिकित्से'त्यादि 'कुर्वन्त्यचेतनाः कर्म' इत्यादि 'हर्षशोकभयक्रोधे'त्यादि श्रुतिस्मृत्यादिपर्यालोचनया अचैतन्यस्यैव प्रवृत्तेः। तान्यचेतनान्यन्तःकरणानि बहूनि इति नोक्तदोष इति दिक्। ननु तर्हि कथं शुको मुक्तः प्रह्लादो वेति प्रथा सङ्गच्छते तत्राह—**शुकादीनामिति**। नन्वस्मिन्पक्षे लक्षणाऽस्ति न वा, सत्यामपि तस्यां कस्योपस्थापकत्वं तत्राह—**महावाक्ये इति**।

**ननु, वस्तुनि विकल्पासम्भवात्कथं परस्परविरुद्धमतप्रामाण्यम्, तस्मात्किमत्र हेयं किमुपादेयमिति चेत्, क एवमाह वस्तुनि विकल्पो न सम्भवतीति। स्थाणुर्वा पुरुषो वा राक्षसो वा इत्यादिविकल्पस्य वस्तुन्यपि दर्शनात्। अतात्त्विकी सा कल्पना पुरुषबुद्धिमात्रप्रभवा, इयं तु शास्त्रीया जीवेश्वरविभागादिव्यवस्था इति चेत्, नूनमतिमेधावी भवान्। अद्वितीयात्मतत्त्वं हि प्रधानं फलवत्त्वादज्ञातत्वाच्च प्रमेयं शास्त्रस्य। जीवेश्वरविभागादिकल्पनास्तु पुरुषबुद्धिमात्रप्रभवा अपि शास्त्रेणानूद्यन्ते, तत्त्वज्ञानोपयोगित्वात्। फलवत्सन्निधावफलं तदङ्गमिति न्यायात् भ्रमसिद्धस्यापि श्रुत्यानुवादसम्भवात्। एतेन द्वैतज्ञानेनाद्वैतज्ञानस्य बाधो निरस्तः[2]। घटादिद्वैतज्ञानस्यापि अद्वैतसन्मात्रांशेऽज्ञाते[3] प्रामाण्याभ्युपगमाच्च। ज्ञानाज्ञानयोस्समानाश्रयविषयत्वनियमात्, जडे च प्रमाणप्रयोजनयोरभावेनाज्ञानानङ्गीकारात्, तदवच्छिन्नचैतन्याज्ञानादेव तत्राप्यज्ञानव्यवहारोपपत्तेः, प्रामाण्यस्य चाज्ञातज्ञापकरूपकत्वात्[4]। अन्यथा स्मृतेरपि तदापत्तेरिति। वेदान्तेषु सर्वत्र एवंविधविरोधेऽयमेव परिहारः। तदाहुर्वार्तिककारपादाः (बृ. आ. भा. वा. १।४।४०२)—**

---

१. कपुस्तके श्रवणादिना मम मोक्षः स्यादिति।

२. कपुस्तके अद्वैतज्ञानस्य बोधो निरस्त इति पाठस्सोऽनुपपन्नः।

३. तस्मिन्नेव अद्वैतसन्मात्रांशेऽद्वैत इति।

४. खगपुस्तकयोः। प्रमाणस्य चाज्ञातज्ञापकत्वेनैव प्रामाण्यादिति।

यया यया भवेत्पुंसां[1] व्युत्पत्तिः प्रत्यगात्मनि ।
सा सैव प्रक्रिया ज्ञेया साध्वी सा च व्यवस्थिता[2] ॥ इति ।

श्रुतितात्पर्यविषयीभूतार्थविरुद्धत्वं च हेयमेवेति शतश उद्घोषितमस्माभिः । तस्मान्न किञ्चिदेतत् ।

अथैकमेव चैतन्यं तदप्युपाधिभेदेन भिन्नं तत्र च कथं एकं नित्यं मुक्तमपरं च बद्धमित्यादिव्यवस्था इत्याशङ्कते—**नन्विति** । यदुक्तं—**इयं तु शास्त्रीयेत्यादिना** । तस्मात् सोपहासं दूषयितुमुपक्रमते—**नूनमित्यादिना** । जीवेश्वरादिविभागस्य शास्त्रप्रमेयत्वाभावं वक्तुमादावद्वितीयात्मतत्त्वस्य प्राधान्यं प्रमेयत्वं च व्यवस्थापयति—**अद्वितीयेति** । प्रधानत्वे हेतुः—**फलवत्त्वादिति** । प्रमेयत्वे हेतुः—**अज्ञातत्वादिति** । जीवेश्वरादीनां शास्त्रप्रमेयत्वं दूषयति—**जीवेश्वरविभागादिति** । अथ कथं पुरुषबुद्धिमात्रप्रभवस्य श्रुत्यनुवादस्तत्राह—**भ्रमसिद्धस्यापीति** । **एतेनेति** । अज्ञानाद्वैतप्रधानविषयत्वेनेत्यर्थः । अज्ञानबोधकं चेत्प्रमाणं तर्हि घटादिबोधकस्य का गतिरत आह—**घटादिद्वैतज्ञानस्येति** । इदमेव प्रतिपादयति—**ज्ञानाज्ञानयोरित्यादिना** । उपसंहरति—**एवमिति** । यदुक्तं किमिव हेयं तत्राह—**श्रुतीति** । अतिमेधावीत्यादिना य उपालम्भः कृतस्तत्राह—**शतश इत्यादि** ।

तदेवं जीवस्योपाधिनाभिभूतत्वात्संसारोपलब्धिः, परमेश्वरस्य तूपाधिवशत्वात् सर्वज्ञत्वादिकमिति सम्यगुपपद्यते व्यवस्था ।

ननु वस्तुनीत्यादिनाऽऽशङ्क्य यत् समाहितं तदिदानीमुपसंहरति—**तदेवमिति** ।

ननु भवत्वविद्यावशाज्जीवेश्वरादिविभागव्यवस्था मानमेयादिप्रतिकर्मव्यवस्था कथमिति चेत्, उच्यते । दृश्यत्वाद्विनाशित्वाच्च परिच्छिन्नाप्यविद्याऽनिर्वचनीयत्वेन विचारासहा आवरणविक्षेपशक्तिद्वयवती सर्वगतं चिदात्मानमावृणोति, अङ्गुलिरिव नयनपुरःस्थिता सूर्यमण्डलम् । तत्र चक्षुष एवावरणेऽङ्गुलेरप्यभानप्रसङ्गात् । अधिष्ठानावरणमन्तरेण च विक्षेपानुपपत्तेश्च । ततः सा पूर्वपूर्वसंस्कारजीवकर्मप्रयुक्ता सती निखिलजगदाकारेण परिणमते । सा च स्वगतचिदाभासद्वारा चित्तादात्म्यापन्नेति तत्कार्यमपि सर्वमाभासद्वारा चिदनुस्यूतमेव[3] । तथा च चैतन्यस्य दीपवत्स्वसम्बद्धसर्वभासकत्वा[4]

१. तयोरेव पुंस इति ।
२. खपुस्तके स्थिरस्थिता गपुस्तके च अनवस्थिता इति ।
३. कपुस्तके तत्कार्यमपि सर्वमायाद्वारा चिदनुस्यूतमेवेति पाठस्य लेखकस्य हस्तदोष एव ।
४. तथाच तस्मिन्नेव दीपवत्स्वयंबद्धसर्वभासकत्वादीत्यपि पाठस्य दोष एव ।

**जगदुपादानचैतन्यं प्रमाणापेक्षामन्तरेणैव सर्वदा सर्वं भासयत् सर्वज्ञं भवति। तेन तत्र न मानमेयादिव्यवस्था। किन्तु जीवे तस्य बुद्ध्यवच्छिन्नत्वेन परिच्छिन्नत्वात् तेन चिदभिव्यक्तियोग्येन येनान्तःकरणेन यदा यत्सम्बद्धं भवति तदेव तदा तदवच्छिन्नो जीवोऽनुभवतीति न साङ्कर्यप्रसङ्गः।**

प्रतिकर्म व्यवस्थामुपपादयितुं भूमिकामारचयति[1]—**नन्विति। आवरणेति।** अविद्या आवरणशक्त्या सर्वगतमखण्डपरमानन्दसाक्षात्कारस्वरूपमात्मानमावृणोति। अत एव आत्मा स्वप्रकाशस्वरूपोऽपि तेन रूपेण न भासते, विक्षेपलक्षणशक्त्या वियदादिसावरणब्रह्माण्डान्तं प्रपञ्चमुद्भावयतीत्यवधेयम्। उभयशक्तिप्रयोजनमावृणोतीति अन्यथा अखण्डानन्दरूपेण ब्रह्मणः स्फूर्तिः स्यादित्यर्थः। अल्पदेशव्यापकेन बहुदेशव्यापकस्यावरणे दृष्टान्तमाह—**अङ्गुलिरिवेति।** अङ्गुलिनावृते चक्षुषि यथा सूर्यमण्डलमावृतमिति बुद्धिः, तथा अविद्यया बुद्धिपिधानेन ब्रह्म आवृतमिति बुद्धिरिति बोध्यम्। ननु तत्रैवं वक्तव्यम्, अङ्गुलिश्चक्षुरावृणोति, आवृतं च न ग्राहकं[2], अतो न सूर्यमण्डलदर्शनमित्यत आह—**तत्रेति।** ननु मास्त्वावरणं ब्रह्मणस्तत्राह—**अधिष्ठानावरणमिति।** यथा शुक्तित्वांशावरणं विना न रजतोत्पत्तिस्तथा ब्रह्मावरणं विना न प्रपञ्चोत्पत्तिरित्यर्थः। साऽविद्या चिदात्मानमावृत्य जगदात्मना परिणमत इत्याह—**ततश्चेति।** अग्रे वक्ष्यमाणस्वसम्बद्धभासकत्वोपपादनार्थमाह—**तत्कार्यमपीति। तदिति।** अविद्येत्यर्थः। ननु भवतु तत्कार्यं चिदनुस्यूतं किं तेन तत्राह—**तथा चेति।** ननु भवतु जगदुपादानं चैतन्यं एवं क्रमेण सर्वभासकत्वेन[3] प्रकृते किमायातमत आह—**तेनेति।** प्रमाणनिरपेक्षतया सर्वभासकत्वेनेत्यर्थः। **तत्र,** ईश्वरे। **तस्येति।** जीवस्य परिच्छिन्नत्वेन, न सर्वसम्बन्धाभावादिति भावः। फलितमाह—**तेनेति। चिदभिव्यक्तियोग्येनेति।** सर्वस्यैव चिदभिव्यक्तियोग्यत्वेन स्वरूपकथनमात्रपरम्। **येनेति।** येनान्तःकरणेन स्वपरिणामद्वारा यस्मिन्काले च घटादीनां मध्ये यद्वस्तु सम्बद्धं भवति विषयीक्रियते तदेव वस्तु तस्मिन्काले तदन्तःकरणावच्छिन्नो जीवोऽनुभवतीत्यर्थः। **न साङ्कर्येति।** न बुद्ध्यन्तरावच्छिन्नजीवस्यानुभवप्रसङ्ग इत्यर्थः।

**एवमत्र प्रक्रिया–शरीरमध्ये स्थितः सर्वशरीरव्यापकः सत्त्वप्राधान्येन सूक्ष्मपञ्चभूतारब्धः अन्तःकरणाख्योऽविद्याविवर्तो दर्पणादिव-**

---

१. खगपुस्तकयोरवतारयतीति।

२. आवृतं चक्षुश्च न ग्राहकमिति गपुस्तके।

३. सर्वज्ञत्वेन इति खपुस्तके, सर्वज्ञं तेन इति च गपुस्तके।

द्गतिस्वच्छो नेत्रादिद्वारा निर्गत्य योग्यान्घटादीन्विषयान्व्याप्य तत्तदाकारो भवति द्रुतताम्रादिवत्। तस्य च सौरालोकादिवत् झटित्येव सङ्कोचविकासावुपपद्येते। स च सावयवत्वात्परिणममानो देहाभ्यन्तरे घटादौ च सम्यग्व्याप्य देहघटयोर्मध्येऽपि चक्षुर्वदविच्छिन्नोऽव्यवतिष्ठते। तत्र देहावच्छिन्नान्तःकरणभागोऽहङ्काराख्यः कर्तेत्युच्यते। देहविषयमध्यवर्ती दण्डायमानस्तद्भागो वृत्तिज्ञानाख्यः क्रियेत्युच्यते[1]। विषयव्यापकस्तद्भागो विषयस्य ज्ञानकर्मत्वसम्पादकमभिव्यक्तियोग्यत्वमित्युच्यते[2]। तस्य च त्रिभागस्यान्तःकरणस्यातिस्वच्छत्वात् चैतन्यं तत्राभिव्यज्यते। तस्य चाभिव्यक्तस्य चैतन्यस्य एकत्वेऽपि अभिव्यञ्जकान्तःकरणभागभेदात् त्रिधा व्यपदेशो भवति। कर्तृभागावच्छिन्नचिदंशः प्रमाता, क्रियाभागावच्छिन्नचिदंशः प्रमाणम्, विषयगताऽभिव्यक्तियोग्यत्वभागावच्छिन्नचिदंशः प्रमितिरिति। प्रमेयं तु विषयगतं ब्रह्मचैतन्यमेवाज्ञातम्। तदेव च ज्ञातं सत्, फलम्।

स्वपरिणामद्वारेति यदुक्तं तत्प्रकटयति—**एवमत्रेति**। सर्वशरीरावच्छेदेन ज्ञानमुपादानस्य सर्वशरीरसम्बन्धं विना न सम्भवत्यत उक्तम्—**सर्वशरीरव्यापक इति**। चिदभिव्यक्तियोग्यत्वप्रकटनायाह—**सत्त्वप्राधान्येनेति**। सत्त्वोद्रिक्ते स्वच्छ एव प्रतिबिम्बो भवति न रजस्तमोद्रिक्तेऽस्वच्छे लोष्टादौ इति भावः। भवत्वेवं तथापि कथं झटिति ध्रुवलोकादिगमनागमनं तत्राह—**तस्य चेति**। पञ्चभूतारब्धत्वं यदुक्तं तस्य फलमाह—**स चेति**। अन्तःकरणाख्य इत्यर्थः। प्रमात्रादिविभागाय तदुपाधिविभागमाह—**तत्र देहेति**। ननु आस्तामुपाधिविभागस्तथापि तत्र चैतन्याभिव्यक्तिः कुतस्तथा च कथं तदभिव्यक्तचैतन्यस्य प्रमातृत्वादिकं तत्राह—**तस्य चेति**। औपनिषदमते तु सर्वत्र चक्षुरादिप्रयोज्यान्तःकरणवृत्तिः प्रमाणमित्यभिप्रेत्याह—**क्रियाभागावच्छिन्न इति**। अत्रापि मूलावच्छिन्नः प्रमाणं, मध्यभागस्तु इन्द्रियविषययोः सन्निकर्षः, सन्निकर्षजन्यं च ज्ञानं प्रत्यक्षम्। तदुक्तमक्षपादाचार्यैः—'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्'। अत्र भाष्यम्—इन्द्रियस्यार्थेन समं सन्निकर्षाद्यदुत्पद्यते ज्ञानं तत्प्रत्यक्षम्। नामधेयशब्देन व्यपदिश्यमानं शाब्दं प्रसज्यतेऽत आह—अव्यपदेश्यमिति। शब्द-

१. कपुस्तके वृत्तिज्ञानाख्या क्रियेत्युच्यते इति पाठः सोऽनुपपन्नः भागशब्दस्य पुंलिङ्गत्वात्।

२. खपुस्तके ज्ञानकर्मत्वसम्पादकं कर्माभियोग्यत्वमिति।

सम्बन्धज्ञानानधीनमित्यर्थः । भ्रमवारणायाव्यभिचारीति, संशयवारणाय व्यवसायात्मकमिति । एवं च सन्निकर्षविधया विषयपर्यन्तान्तःकरणवृत्तिरपेक्षितेत्यवधेयम् । एतेनात्रापि अनुमानादिवदन्तर्धीसमुल्लास एव, न तु विषयपर्यन्तान्तःकरणवृत्तिरित्यपास्तम् ।

**अत्र च यस्मिन्पक्षे अन्तःकरणावच्छिन्नो जीवः, यस्मिंश्च पक्षे सर्वगतोऽसङ्गोऽविद्याप्रतिबिम्बो जीवः, तत्रोभयत्रापि प्रमातृचैतन्योपरागार्था विषयगतचैतन्यावरणभङ्गार्था चान्तःकरणवृत्तिः । यस्मिंश्च[1] पक्षे अविद्यावच्छिन्नः सर्वगतो जीवः आवृत्तः तस्मिन्पक्षे जीवस्यैव जगदुपादानत्वेन सर्वसम्बद्धत्वात् आवरणभङ्गार्था वृत्तिरिति विवेकः ।**

सन्निकर्षाजन्यत्वेन अनुमित्यादिवत् प्रत्यक्षत्वाभावाच्च कस्मिन्पक्षे वृत्तेः किं प्रयोजनमिति विविच्य वक्तुमुपक्रमते—**अत्र चेति** । अन्तःकरणावच्छिन्नजीवपक्षे परिच्छिन्नत्वात् तस्यैव परिच्छिन्नजीवस्य वृत्तिमदन्तःकरणरूपाधिककञ्चुकप्रवेशात् प्रमातृत्वम् । एवं च प्रमातृचैतन्याभिन्नजीवस्य विषयसम्बन्धार्थावृत्तिः । एवं सर्वगतस्यापि स्वतोऽसङ्गस्य वृत्तिमदन्तःकरणरूपाधिककञ्चुकप्रवेशात् प्रमातृत्वम् । तस्य च[2] स्वतोऽसङ्गस्य विनावृत्तिं विषयासम्बन्धाभावात्, असङ्गसर्वगतपक्षेऽपि वृत्तिरपेक्षिता । प्रमेयचैतन्यप्रमातृचैतन्ययोः सम्बन्धपक्षेऽपि वृत्तिरपेक्षिता । अन्यथा मयाऽयं विदितो घट इति प्रमेयचैतन्यासम्बन्धे प्रमातृचैतन्यस्य प्रत्ययो न स्यात् । अत उभयपक्षेऽपि प्रमातृचैतन्योपरागार्था वृत्तिरावश्यकीति मन्तव्यं सूरिभिः । सर्वगतः, प्रपञ्चव्यापकः । **असङ्ग इति** । असङ्गः, अविद्यासङ्गरहितः, अनावृतः इत्यर्थः । विषयस्य प्रमातृचैतन्येन सह यः सम्बन्धः स विनावृत्तिं न सम्भवति, एकलोलीभावाभावात् । विना च प्रमातृचैतन्यसम्बन्धं मयाऽयं विदितो घटः इत्यादिप्रत्ययो न भवति इत्यतः प्रमातृचैतन्यसम्बन्धो विषयस्य आवश्यक इत्याह—**प्रमातृचैतन्योपरागार्थेत्यन्तेन** । अत्र चेत्यादिना पूर्वोक्तोभयमते विषयस्तु ब्रह्मचैतन्येऽध्यस्त इत्यवधेयम् । उपरागः, सम्बन्धः । **विषयगतेति** । विषयचैतन्यावरणभङ्गस्तु विनावृत्तिं न सम्भवतीति । उक्तोभयपक्षेऽपि विषयावरणभङ्गार्था वृत्तिरावश्यकीत्यर्थः । वाचस्पतिमिश्रमते तु आवरणभङ्गार्थैव वृत्तिर्न सम्बन्धार्था सर्वेषां पदार्थानां तत्सम्बन्धत्वादित्याह—**यस्मिंश्चेति** ।

---

१. कपुस्तके इदं वाक्यं न दृश्यते ।

२. खगयोस्तथा चेति ।

ननु चिदुपरागार्था वृत्तिरिति पक्षे स्वतोऽन्तःकरणसम्बद्धानां धर्माधर्मादीनां ब्रह्मणश्च वृत्तिमन्तरेणैव सर्वदा भानं स्यात्। न स्यात्, चैतन्यस्य तत्तदाकारत्वाभावात्। तदभावश्च स्वच्छेऽपि ब्रह्मचैतन्ये आवरणात्, अनावृतेऽपि शुक्तिरजतादावस्वच्छत्वात्[1], धर्माधर्मादौ तु अस्वच्छत्वादावृतत्वाद्वा। तेन स्वच्छेऽप्यावृते प्रमाणवृत्त्या[2] तदाकारता, अनावृतेऽप्यस्वच्छे शुक्तिरजतादावविद्यावृत्त्या तदाकारता, अनावृते स्वच्छे तु सुखदुःखादौ स्वत इति नान्तःकरणसम्बन्धमात्रेण भानप्रसङ्गः।

प्रमातृचैतन्योपरागार्था वृत्तिरित्यत्राशङ्कते—**नन्विति**। वृत्तिव्यतिरेकेणापि सम्बन्धसत्त्वादिति भावः। धर्माधर्मादीनामित्युपलक्षणमनावृतचैतन्याध्यस्तानां शुक्तिरजतादीनाम्। परिहरति—**न स्यादिति**। **तदभावः**, तदाकारत्वाभावः। **आवृतत्वाद्वेति**। तदभावश्चेत्यनेनान्वयः। ब्रह्मणश्चेत्यादिना यदुक्तं तत्परिहरति—**स्वच्छेऽपीति**। तदाकारकत्वाभावप्रयोजकमुपपाद्य तदाकारकत्वप्रयोजनमाह—**तेन स्वच्छेऽप्यावृत इति**। ब्रह्मणि इति शेषः।

ननु, ब्रह्मणः कथमावरणम्, निरवयवस्वप्रकाशत्वेन सर्वज्ञत्वात्। सत्यम्, स्वसम्बद्धसर्वभासकतया सर्वज्ञमपि अन्तःकरणावच्छिन्नजीवाज्ञानविषयतया आवृतमिति व्यपदेशात्। तस्माद्ब्रह्म जगदुपादानमिति पक्षे चिदुपरागार्था आवरणभङ्गार्था च वृत्तिः, जीवोपादानत्वपक्षे तु आवरणभङ्गार्थैवेति।

ननु, यदि ब्रह्मण्यावरणं संभवति तद्प्रमाणवृत्त्या तदाकारत्वं वक्तव्यं तदेव न संभवति तथा कथमुक्तं स्वच्छेऽपि ब्रह्मचैतन्ये आवरणादित्याशङ्कते—**ननु ब्रह्मण इति**। जीवाज्ञानविषयत्वेनावृतत्वादिति। यद्यप्यावरणशक्तिमती अविद्या ईश्वरोपाधिस्तथापि तस्या ईश्वरं प्रति नावरकत्वमन्यथा सार्वज्ञभङ्गापत्तेः किन्तु जीवं प्रतीत्यर्थः। अत्र चेत्यादिना यदुक्तं तदुपसंहरति[3]—**तस्मादिति**। यस्मिंश्च पक्ष इत्यनेन यदुक्तं तदुपसंहरति—**जीवोपादानत्व इति**।

ननु, एकेनैव घटादिज्ञानेनावरणभङ्गे सद्यो मोक्षप्रसङ्गः, अज्ञा-

१. गपुस्तके शुक्तिरजतादिवदिति।

२. कपुस्तके प्रमाणप्रवृत्त्या इति।

३. खगयोस्तदुभयमुपसंहरतीति पाठः स न युक्तः।

नस्यैकत्वात्। नानाज्ञानपक्षेऽपि एकस्य जीवस्यैकाज्ञानोपाधित्वात्[1]। न, उत्तेजकेन मणेरिव[2] वृत्त्यावरणस्याभिभवाङ्गीकारात्। तथा च प्रमाणजन्यान्तःकरणवृत्त्यभावसहकृतमज्ञानं सति भात्यपि वस्तुनि नास्ति न भाति इति प्रतीतिजननसमर्थमावरणमित्युच्यते। वृत्तौ जातायां त्ववच्छेदकाभावाद्[3]विद्यमानमप्यविद्यमानसममेवेति न स्वकार्यसमर्थमज्ञानं तेनाभिभूतमित्युच्यते।

ननु विषयप्रकाशाय आवरणभङ्गार्था चेद्वृत्तिरङ्गीक्रियते तर्हि अतिप्रसङ्ग इत्याशङ्कते—**नन्विति**। ननु नानाज्ञानपक्षोऽप्यस्ति, तथा च नातिप्रसङ्गस्तत्राह—**नानाज्ञानपक्षेऽपीति**। फलितमाह—**तथा चेति**। आवरणपदार्थमाह—**सतीत्यारभ्य समर्थमित्यन्तेन**। नन्वेवं चेत् तर्हि कथमभिभवस्तत्राह—**वृत्तौ जातायामिति**।

ननु, एवं सति ब्रह्मज्ञानेनाप्यविद्याया अनिवृत्तेरनिर्मोक्षप्रसङ्गः। न, तत्त्वमस्यादिवाक्यार्थज्ञानादविद्यानिवृत्त्यभ्युपगमात्, स्वविषयप्रमात्वेनैवा[5]विद्यानिवर्तकत्वान्महावाक्यार्थज्ञानस्यैवाबाधितविषयतया प्रमात्वात्। प्रत्यक्षादीनां तु बाधितविषयतया भ्रमत्वेऽपि व्यवहारसामर्थ्येन प्रामाण्याभिमानात्, ज्ञानादज्ञाननिवृत्तेरन्यत्रादर्शनं चाकिञ्चित्करम्, स्वानुभवसिद्धत्वात्, अन्यथानुपपत्तेश्च सर्वतो बलवत्त्वात्। तदुक्तम् (ख. ख. खा. १)—

अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका।
पिनष्ट्यदृष्टिवैमत्यं[6] सैव सर्वबलाधिका॥ इति॥

अथवा मूलाज्ञानस्यैवावस्थाज्ञानानि घटादिविषयावरणानि। अज्ञानस्य प्रागभावस्थानीयत्वेन यावन्ति ज्ञानानि तावन्त्यज्ञानानीत्यभ्युपगमात् एकेन च ज्ञानेनैकाज्ञानस्यैव नाशात्, घटादिज्ञानेनावरणनाशेऽपि न काचिदनुपपत्तिः।

---

१. कपुस्तके नानाज्ञानपक्षेऽपि एकाज्ञानोपाधिकत्वादिति।
२. खगपुस्तकयोरुत्तेजकत्वेन मणेरिव इति पाठः स न युक्तः।
३. कपुस्तकेऽवच्छेदकत्वाभावादिति, खपुस्तके चाज्ञानलक्षणावच्छेदकाभावादिति।
४. क,पुस्तके विषयप्रकाशावरणभङ्गार्था वृत्तिरिति।
५. खपुस्तके स्वविषयविषयप्रमात्वेनैव इति।
६. तस्मिन्नेव पिनष्ट्यदृष्टवैमत्यमिति, कलिकातायां मुद्रिते खण्डनखण्डखाद्ये च पिनष्टिदृष्टवैमत्यमिति।

शङ्कते—**नन्विति**। **एवं**, अभिभवाङ्गिकारे। अथ घटज्ञानाच्चैकाज्ञाननिवृत्तिस्तर्हि कथं वाक्यार्थज्ञानादनिवृत्तिः, उभयोरपि ज्ञानत्वाविशेषादत आह[1]—**स्वविषयेति**। घटमात्रविशेष्यघटत्वप्रकारकज्ञानस्यापि प्रमात्वमव्याहतं तत्राह—**महावाक्यार्थेति**। प्रातीतिकस्याधिष्ठानज्ञानबाध्यत्ववत् व्यावहारिकस्यापि ब्रह्मज्ञानबाध्यत्वात् घटादिज्ञानानां बाधितविषयत्वेनाप्रामाण्यं[2], ब्रह्मज्ञानं तु न तथा, ब्रह्मणः कालत्रयाबाध्यत्वादित्याशयेनोक्तं—**वाक्यार्थज्ञानस्यैवाबाधितविषयतया प्रमात्वादिति**[3]। ब्रह्मज्ञानातिरिक्तस्याप्रमात्वे जगति प्रमाव्यवहारोच्छेदस्तत्राह—**प्रत्यक्षादीनां त्विति**। विशेष्यावृत्तिप्रकारकत्वादिरूपप्रामाण्यमादाय प्रामाण्यव्यवहार इत्यपि बोध्यम्। ननु घटादिज्ञानानामप्रामाण्येनानाशकत्वे ज्ञानाज्ञानयोर्नाश्यनाशकभावः कुतः क्लृप्तः यद्बलाद्वाक्यार्थज्ञानस्याज्ञाननाशकत्वं कल्प्यते तत्राह—**ज्ञानादज्ञाननिवृत्तेरिति**। **स्वानुभवसिद्धत्वात्**, जीवन्मुक्तानुभवसिद्धत्वादित्यर्थः। ज्ञानादज्ञानानिवृत्तौ अज्ञानमूलकसंसारानुच्छेद इत्याह—**अन्यथानुपपत्तेश्चेति**। स्वोक्तसम्पादनाय खण्डनकारिकामवतारयति—**अन्यथेति**। **पिनष्टि** नाशयति, पिष्लृ संचूर्णने इति धातोर्निष्पन्नत्वेन नाशार्थत्वात्। सम्प्रदायमनुरुन्ध्याह—**अथवेति**। तर्हि एकेन ज्ञानेन एकाज्ञाननाशे सद्यो मुक्तिप्रसङ्गस्तत्राह—**मूलाज्ञानस्येति**। एवं च मूलाज्ञानस्यानाशात् एकस्यावस्थाज्ञानस्य नाशेऽप्यपरावस्थाज्ञानसत्वाच्च न सद्यो मोक्षप्रसङ्गो न वा सर्वदा घटस्य भानमिति भावः। प्रघट्टकार्थमुपसंहरति—**घटादिज्ञानेनेति**। **न काचिदनुपपत्तिरिति**, न सद्यो मोक्षप्रसङ्ग इत्यर्थः। अथवा एकेन घटादिज्ञानेन एकावस्थाज्ञाननाशे सर्वदाघटादेर्भानं स्यात्, आवरकान्तराभावात्तत्राह—**घटादिज्ञानेनेति**। एकाज्ञाननाशेऽप्यज्ञानान्तरसत्त्वात्[4] न घटादेः सर्वदाभानप्रसङ्ग इति भावः। एवमप्यस्मिन्पक्षे घटाकारादिवृत्तिसत्त्वे अवस्थाज्ञानरूपावरकान्तरसत्त्वेन एकस्य मणेर्नाशेऽप्यपरमणिसत्त्वे दाहानुत्पत्तिवत् घटादिव्यवहारानुदयप्रसङ्गात् वृत्त्यभावसहकृता[5]वस्थाज्ञानस्यावरकत्वावश्यकत्वं वक्तव्यम्। तथा च पूर्वोक्तरीत्यैवोपपत्तौ, अलमनन्ताज्ञानकल्पनेन इति नव्याः। यदि च ज्ञानप्रागभावस्थानीयत्वेनाज्ञानमङ्गीकुर्वन्ति तन्न निवारयामः। यदि वा वाक्यार्थज्ञानादपि मूलाज्ञाननाशस्य दुरुपपादत्वापत्तेः प्रमाऽज्ञानयोर्नाश्यना-

---

१. क₁खपुस्तकयोः कथं वाक्यार्थज्ञानादुभयोरपि ज्ञानत्वाविशेषादत आह इति।

२. क₁पुस्तके बाधितविषयत्वेन प्रामाण्यमिति पाठः स न युक्तः।

३. वाक्यार्थज्ञानस्य चाबाधितविषयकत्वेन प्रामाण्यमिति टीकायास्त्रिष्वपि हस्तलेखेषु मूले तु उपरि मुद्रितं तथैव।

४. तस्मिन्नेव अज्ञानान्तरभावादिति।

५. खपुस्तके प्रसङ्गवृत्त्यभावसहकृता इति।

शकभावबलादज्ञानमिच्छन्ति तदपि न निराकुर्मः। किन्तु घटादिज्ञानेनाज्ञाननाशे सद्यो मुक्तिप्रसङ्ग इत्यभिमतमभिधाय यदवस्थाज्ञानाङ्गीकरणं तत्किमर्थमिति न जानीम इति दिक्।

**ननु, अनुमानादिभिरावरणं निवर्तते न वा। आद्ये साक्षात्कारिभ्रमस्यापि शङ्खपीतत्वादेः श्वेतत्वाद्यनुमानादिना निवृत्तिप्रसङ्गः, अधिष्ठानाज्ञानोपादानकत्वेन भ्रमस्य तन्निवृत्तौ निवृत्तेः। यौक्तिकज्ञानेन च ब्रह्मण्यविद्यानिवृत्तेः साक्षात्कारार्थं श्रवणमननाद्यपेक्षणं न स्यात्। द्वितीये च वह्न्यादिव्यवहारो न स्यात्, प्रतिबन्धकस्य विद्यमानत्वात्। उच्यते—द्विविधमावरणम्, एकमसत्त्वापादकमन्तःकरणावच्छिन्नसाक्षिनिष्ठम्, अन्यद्भानापादकं विषयावच्छिन्नब्रह्मचैतन्यनिष्ठं, घटमहं न जानामीत्युभयावच्छेदानुभवात्। तत्राद्यं परोक्षापरोक्षसाधारणप्रमामात्रेण निवर्तते। अनुमितेऽपि वह्न्यादौ नास्तीति प्रत्ययानुदयात्[1]। द्वितीयं तु साक्षात्कारेणैव निवर्तते। यन्निष्ठं यदाकारं ज्ञानं तन्निष्ठं तदाकारमज्ञानं नाशयतीति नियमात्[2], परोक्षापरोक्षनिष्ठत्वात्[3]। तदुक्तम् (पञ्च. ७.४५)—**

**परोक्षज्ञानतो नश्येदसत्त्वावृत्तिहेतुता।**
**अपरोक्षधिया नश्येद्भानावृत्तिहेतुता॥**

**तेनानुमानादेरसत्त्वावरणनाशात्[4] तत्र तद्व्यवहारः। अभानावरणनिवृत्त्या च सोपाधिकसाक्षात्कारिभ्रमनिवृत्तिरिति। तस्मान्निर्धर्मकस्याप्यात्मनोऽविद्यान्तःकरणतादात्म्याध्यासात्तद्धर्मकर्तृत्वभोक्तृत्वाद्यध्यास उपपद्यते।**

प्रकृतं समाप्य विचारान्तरमारभते—**नन्विति**। **आद्य इति**। अज्ञानं निवर्तत इति पक्ष इत्यर्थः। तत्र हेतुमाह—**अधिष्ठान इति**। दूषणान्तरमाह—**यौक्तिक इति**। अज्ञानं न निवर्तत इति पक्षमाह—**द्वितीय इति**। वह्न्यादिव्यवहाराभावे हेतुमाह—**प्रतिबन्धकस्येति**। आवरकस्याज्ञानस्येत्यर्थः। **अस-**

---

१. खगयोः प्रतीत्यनुदयादिति पाठः।

२. खपुस्तके यदाश्रयं यदाकारं ज्ञानं तदाश्रयं तदाकारमज्ञानं नाशयतीति। कपुस्तके यन्निष्ठा यदाकारा च वृत्तिर्भवति तन्निष्ठं तदाकारमज्ञानं नश्यतीति।

३. कपुस्तके परोक्षवृत्तेश्चान्तर्धीसमुल्लासमात्रत्वेन विषयनिष्ठत्वाभावादपरोक्षवृत्तेश्च विषयान्तःकरणोभयजन्यत्वेन तदुभयनिष्ठत्वादिति।

४. खगपुस्तकयोरनुमानादावसत्त्वावरणनाशादिति।

**त्वापादकमिति** । असत्त्वं, सत्त्वाभावः । एवं च इदमत्र नास्तीति प्रत्ययापादकमावरणमित्यर्थः । **अभानापादकमिति** । ज्ञानं अपरोक्षज्ञानं तदभावोऽभानं तदापादकं, तथा चाप्रत्यक्षत्वापादकमावरणमित्यर्थः । ननु, कीदृशं ज्ञानं कीदृशमज्ञानं नाशयति तत्राह—**यन्निष्ठमिति** । **तदुक्तं**, वार्त्तिककारपादैः[1] इत्यर्थः । साक्षात्कारिशंखपीतत्वादिभ्रमोऽपि निवर्तते तत्राह—**अभानावरणेति** । अविद्यया कर्तृत्वादिभाक् परमार्थतो निर्धर्मक इत्यौपनिषदमते यदुक्तं प्राक् तदिदानीमुपपादयति—**तस्मादिति** । **तादात्म्येति** । तादात्म्येनान्तःकरणाध्यासादित्यर्थः ।

**ननु त्वन्मतेऽनिर्वचनीयख्यात्यभ्युगमात्, ये कर्तृत्वादयोऽन्तःकरणधर्मा आत्मन्यध्यस्यन्ते तेऽनिर्वचनीयास्तत्रोत्पद्यन्त इति वक्तव्यम्। तथा च व्यावहारिकप्रातीतिकभेदेन कर्तृत्वभोक्तृत्वादीनां द्वैधावभासः स्यात्। न स्यात्, तादात्म्याभिमानेनाविवेकात्। सकलधर्मविशिष्टस्यैवान्तःकरणस्यात्मन्ययस्तत्वेन द्वयाभावाद्वा। तस्मादेकस्यैवात्मन उपाधिभेदेन प्रमात्रादिव्यवस्थोपपत्तेर्न सौगतमतापत्तिर्न वा विरोधः। अन्यापि व्यवस्थाः स्पष्टतरमुपरिष्टादुपपादयिष्यन्ते। तस्माज्ज्ञानस्वरूपस्यात्मनः सुषुप्तावव्यभिचाराद्देहेन्द्रियादीनां च व्यभिचाराद्दृश्यत्वाच्च तत्र तत्रात्मबुद्धिस्तेषां तेषां वादिनां भ्रान्तिरित्यौपनिषदमतमेव प्रमाणमिति सिद्धम् ॥ १ ॥**

ननु यथा व्यावहारिकं रजतमेकं, अपरं च प्रातीतिकं तथा कर्तृत्वादिकमप्युभयं वक्तव्यमित्याशङ्कते—**ननु त्वन्मत इति**। ये कर्तृत्वादय इति येषां धर्मा अध्यस्यन्ते ते तद्व्यावहारिका इति भावः । परिहरति—**न स्यादिति** । यदुक्तं द्विधावभासः स्यादिति तदपनुदति—**तादात्म्येति** । द्वितीयमेव नास्तीत्याह[2]—**सकलधर्मेति** । यदुक्तमेकस्यैवात्मनः प्रमाणप्रमेयप्रमितिरूपता च विरुद्धा, अविरोधाभ्युपगमे वा सौगतमतापत्तिरिति तदपनुदति—**तस्मादेकस्यैवेति** । प्रथमोक्तस्य विरोधस्य **व्यवस्थोपपत्तेरित्यन्तेन** प्रथमो दूषितत्वान्न विरोध इत्यनुवादमात्रम् । एतेन प्रथममुक्तो विरोधः प्रथमतः किमिति न दूषित इत्यपास्तम् । परमप्रकृतमुपसंहरति—**तस्माज्ज्ञानस्वरूपस्येति** । इति प्रथमश्लोकविवरणम् ।

**स्यादेतत्। आत्मनोनिर्धर्मकत्वे प्रमात्रादिव्यवहारस्याध्यासमूलत्वे च 'ब्राह्मणो यजेत' इत्येवमादीनां शास्त्राणामप्रामाण्यप्रसङ्गः,**

१. अयं श्लोको न वार्त्तिकेऽपि तु पञ्चदश्यामुपलभ्यते ।
२. क१पुस्तके द्वितीयेन नास्तीत्याह इति पाठः स न समीचीनः ।

अकर्तुरभोक्तुश्चात्मनः प्रवृत्त्यनुपपत्तेः, वेदाप्रामाण्ये च कुतो ब्रह्मसिद्धिरपि, तस्य तन्मात्रगम्यत्वात्, शास्त्रयोनित्वादिति न्यायात्। तथा च वेदप्रामाण्यार्थं प्रमात्रादिव्यवहारस्य सत्यत्वमभ्युपेयमित्याशङ्क्य, किं तत्त्वज्ञानात्पूर्वमप्रामाण्यमापद्यते ऊर्ध्वं वा। तत्राद्ये यावदविद्यानिवृत्तिव्यवस्थाया उपपादितत्वात्सर्वेषां प्रमाणानामविद्यावद्विषयत्वेन तद्दशायां बाधाभावान्निष्प्रत्यूहं प्रामाण्यम्। द्वितीये त्विष्टापत्तिरेवेत्याह—

न वर्णा न वर्णाश्रमाचारधर्मा
न मे धारणाध्यानयोगादयोऽपि।
अनात्माश्रयाहंममाध्यासहानात्
तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ २ ॥

श्लोकार्थः। वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः। आश्रमाश्च ब्रह्मचारिगृहस्थवानप्रस्थभिक्षवः। आचाराः शौचस्नानादयः। धर्माः ब्रह्मचर्यगुरुसेवादयः। अत्र द्वन्द्वद्वयगर्भषष्ठितत्पुरुषेण वर्णानामाचाराः धर्माश्च आश्रमाणामप्याचाराः धर्माश्च लभ्यन्ते। धारणा ब्रह्मणि[1] बाह्यविषयत्यागेन मनसस्स्थैर्यम्। ध्यानं परमात्मचिन्तनम्। योगश्चित्तवृत्तिनिरोधः[2]। आदिशब्देन श्रवणमननादयो गृह्यन्ते। सर्वेषां ज्ञानोत्तरकालमसत्त्वे हेतुमाह—अनात्माश्रयाहंममाध्यासहानादिति। अनात्मा आत्मविरोधिनी अविद्या, तदाश्रयस्तदुपादानो योऽहंममकाराद्यध्यासस्[3]तस्य समूलस्यापि तत्त्वज्ञानेन हानात् तत्प्रयुक्तवर्णाश्रमादिव्यवहारो नास्तीत्यर्थः ॥ २ ॥

द्वितीयश्लोकावतरणिकामाह—**स्यादेतदित्यादिना**। उभयमभिप्रेत्याह—**ब्राह्मण इति**। निर्धर्मकस्यात्मनो ब्राह्मणत्वयागानुकूलकृत्यादीनां वैशिष्ट्यबोधनेन कृत्याक्षिप्तज्ञानेच्छादीनां बोधनेन च शास्त्राणामप्रामाण्यमध्यस्तबोधने च शुक्तिरजतबोधकवाक्यवदाहत्यैवाप्रामाण्यमित्यर्थः। निर्धर्मकत्वमभिप्रेत्याह—**अकर्तुरिति**। कर्ता हि स्वेष्टसाधनतामनुसन्धाय प्रवर्तते नाकर्ता, तथा च श्रवणादावपि

१. कपुस्तके ब्रह्मणि इत्येतच्छब्दो न वर्तते तथापि स आवश्यक इति खगयोर्गृहीतः।
२. तस्मिन्नेव चित्तवृत्तेर्निरोधः इति पाठः।
३. कपुस्तके योऽहंकारस्तदाश्रयो ममकाराद्यध्यासस्तस्य इति।

प्रवृत्तिर्न स्यादित्याशयः। ननु भवतु कर्मकाण्डाप्रामाण्यं किं तेन तत्राह—**वेदाप्रामाण्ये चेति**। कर्मकाण्डाप्रामाण्ये उपनिषदामप्यप्रामाण्यं वक्तव्यम्। अन्यथा अर्धजरतीयन्याय आपतेत्। किं चोपनिषद्भागमध्येऽपि बहून्युपासनाप्रतिपादकानि वाक्यानि। तेषां प्रामाण्यस्वीकारे किमप्यपराद्धं कर्मकाण्डेन। तथा च सर्ववेदस्याप्रामाण्यं वक्तव्यम्। तथा च न ब्रह्मसिद्धिरपीत्यर्थः। तन्मात्रगम्यत्वे बादरायणीयसूत्रं[1] प्रमाणत्वेनाह—**शास्त्रयोनित्वादिति**। अस्यार्थः यथोक्तं ऋग्वेदादिशास्त्रं प्रमाणमस्य ब्रह्मणो यथावत् स्वरूपाधिगमे, शास्त्रादेव प्रामाण्याज्जगतो[2] जन्मादिकारणं ब्रह्मावगम्यते इत्यनेन भगवता भाष्यकारेण प्रकटित इति बोध्यम्। अयमर्थः कुतो लब्ध इत्यत आह—**अत्र द्वन्द्व इति**। वर्णाश्च आश्रमाश्च आचाराश्च धर्माश्च वर्णाश्रमाचारधर्माः वर्णाश्रमाणामाचारधर्माः इत्यर्थः। पतञ्जलिसूत्रेण योगपदार्थं व्याख्याति—**योग इति**। **आत्मविरोधिनी,** आत्मबोधविरोधिनी। इति द्वितीयः श्लोकः।

**वर्णाश्रमादिव्यवहारस्य मिथ्याज्ञानमात्रमूलत्वेन मिथ्यात्वं द्रढयितुं तद्व्यतिरेके सुषुप्तौ, व्यतिरेकमाह—**

**न माता पिता वा न देवा न लोका**
**न वेदा न यज्ञा न तीर्थं ब्रुवन्ति।**
**सुषुप्तौ निरस्तातिशून्यात्मकत्वात्**
**तदेकोऽवशिष्टः शिवः केवलोऽहम्॥ ३॥**

**श्लोकार्थः। माता जनकस्त्री। पिता जनकः पुमान्। देवा इन्द्रादयः आराध्याः। लोकास्तदाराधनफलानि स्वर्गादीनि। वेदाः अलौकिकहिताहितसाधनप्रतिपादकानि ब्रह्मप्रतिपादकानि च प्रमाणवाक्यानि[3]। यज्ञाः स्वर्गादिसाधनीभूता ज्योतिष्टोमादयः। तीर्थं यज्ञसाधनीभूतः कुरुक्षेत्रादिदेशः। एवं पापकर्मसाधनान्यप्युपलक्षणीयानि। सर्वेषां देहाभिमानमूलकत्वात्[4] तदभावे स्वतःसम्बन्धाभावाद्-**

---

१. खगयोर्बादरायणप्रणीतमिति पाठः।

२. गपुस्तके प्रमाणादिति।

३. कपुस्तके वेदाः लौकिकप्रमाणाः प्रतिपन्नहिताहितसाधनप्रमाणवाक्यानि इति।

४. कपुस्तके सर्वेषां प्राणिनां पुण्यपापाभ्यां सम्बन्धस्य देहाभिमानमूलत्वादिति पाठः।

विद्यमानतेत्यर्थः। तथा च सुषुप्तिं प्रकृत्य श्रुतिः—'अत्र पिताऽपिता भवति माताऽमाता देवा अदेवा वेदा अवेदाः स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति' (बृ. आ. ४।३।२२) इत्याद्या अभिमानाभावे सर्वानर्थनिवृत्तिमनुवदन्ति।

तृतीयश्लोकावतारणिकामाह—**वर्णाश्रमादीति**। पितुरपेक्षया मातुरभ्यर्हितत्वादादावाह—**न मातेति**। तदर्थमाह—**माता जनकस्त्रीति**। प्रमाणवाक्यानीत्युपलक्षणं तदुपजीविनामर्थवादवाक्यादीनां तथा च चत्वारो वेदा इत्यर्थः। अथवा, चतुर्ष्वेव वेदेषु यानि प्रमाणवाक्यानि तानि चेन्न सन्ति तर्हि का कथाऽर्थवादानामित्याशयः। **यज्ञा इति**। एतेन तत्साध्यमपूर्वादिकमपि व्याख्यातम्। **एवं पापकर्मेति**। पापकर्माभावात् कुतः पापं तदभावाच्च कुतो नरकादिकमित्यनुसन्धेयम्। एतेषामभावे हेतुमाह—**सर्वेषामिति**। आचार्योक्तमर्थमतिप्रामाणिकीकर्तुं बृहदारण्यकश्रुतिमुदाहरति—**तथा चेत्यादिना**। **अनन्वागतमिति**। असम्बद्धमित्यर्थः।

ननु, सर्वव्यवहाराभावे शून्यतैव स्यात्। न, इत्याह—निरस्तातिशून्यात्मकत्वादिति। निरस्तमतिशून्यात्मकत्वं यस्मात्तत्तथा। भावप्रधानो निर्देशः। तस्य सुषुप्तिसाधकत्वात्पुनरुत्थानानुपपत्तेश्च। 'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा' (बृ. आ. ४।५।१४), 'मात्रा संसर्गस्त्वस्य भवति', 'यद्वैतन्न पश्यति पश्यन्वैतन्न पश्यति' (सैव ४।३।२३), 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते, अविनाशित्वात्, न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' (सैव) इत्यादिश्रुतिभ्यश्चात्मचैतन्यस्य न सुषुप्तौ शून्यतेत्यर्थः। निराकृतमप्येतत्पुनरपि स्थूणानिखननन्यायेन निराक्रियते। यद्वा निरस्तमशनायाद्यतीतमद्वितीयमतिशून्यं यद्ब्रह्म तदात्मकत्वात्। तथा च श्रुतिः—'यदा पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति, तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् एवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' (छां.

---

१. क₁ पुस्तके अर्थवादऊंफडादीनामिति।

२. खगयोरतिशून्यनिर्धर्मकं यद्ब्रह्म इति।

**६।८।१) इति । तेन जगत्कारणीभूतसर्वज्ञसर्वशक्तिपरिपूर्णानन्द-बोधरूपेण ब्रह्मणा सहैकत्वादसंसार्येव जीव इति सिद्धम् ॥ ३ ॥**

**यस्मादिति ।** चैतन्यादित्यर्थः । बृहदारण्यकश्रुतिमाह—**अविनाशी वा इति । मात्रेति ।** मीयते इति मात्राशब्दस्तेनासम्बन्ध इत्यर्थः । **यद्वै इति ।** वै, अव्ययम् । तत्तदा सुषुप्तौ यन्न पश्यतीत्यन्वयः । अतिशून्यात्मकत्वाभावे ग्रन्थकारः स्वातन्त्र्येण हेतुमाह—**तस्येत्यादिना ।** तस्य, चैतन्यस्य । न खमित्यादिना प्रथमश्लोके शून्यवादस्य निराकृतत्वात् पौनरुक्त्यमित्याशङ्क्याह—**निराकृतमपीति ।** उक्तपौनरुक्त्यभिया प्रकारान्तरेण व्याकरोति—**यद्वा इति । अतिशून्यमिति ।** 'कं ब्रह्म खं ब्रह्म' इति श्रुत्या खशब्दस्य ब्रह्मवाचकत्ववद[1]तिशून्यपदस्यापि ब्रह्मवाचकत्वमित्यर्थः । अनेन यज्जीवस्य ब्रह्मभाव उक्तस्तत्र बृहदारण्यकश्रुतिं प्रमाणयति—**तथा च श्रुतिरिति । सता इति ।** सच्छब्दवाच्येन ब्रह्मणा इत्यर्थः । श्लोकश्रुत्योस्तात्पर्यमाह—**तेन जगत्कारणीभूतेति ।** इति तृतीयः श्लोकः ।



१ क, पुस्तके ब्रह्मवाचकत्वादिति पाठः स न समीचीनः ।

# द्वितीयो विभागः ।

## तत्पदार्थनिर्णयः ।

एवं तावत् त्रिभिः श्लोकैः वादिविप्रतिपत्तिनिराकरणपूर्वकं त्वम्पदार्थौ निर्धारितः[1] । सम्प्रति तत्पदार्थस्तथैव निर्धारणीयः । तत्र निराकरणीया वादिविप्रतिपत्तयः प्रदर्श्यन्ते । ननु, न ब्रह्मणा सह जीवस्यैक्यमुपपद्यते[2] । तथा हि सच्छब्दवाच्यं जगत्कारणं ब्रह्म 'सदेव सोम्य इदमग्र आसीत्' ( छां. ६।२।१ ) इत्यादिवाक्येन प्रतिपादितम् । जगत्कारणं च प्रधानमचेतनमिति साङ्ख्याः । पशुपतिरेव जगत्कारणम्, स च चेतनोऽपि जीवाद्भिन्नः स उपास्य एवेति पाशुपताः । भगवान्वासुदेव ईश्वरो जगत्कारणम्, तस्मादुत्पद्यते सङ्कर्षणाख्यो जीवः, तस्मान्मनः प्रद्युम्नः, ततोऽहङ्कारोऽनिरुद्धः, तेन कार्यत्वाज्जीवस्य तेन सह न ब्रह्मणो वासुदेवस्यात्यन्ताभेद इति पाञ्चरात्रिकाः । परिणामी नित्यः सर्वज्ञो भिन्नाभिन्न इति जैनास्त्रिदण्डिनश्च । नास्ति सर्वज्ञाद्युपेतं ब्रह्म, आम्नायस्य क्रियापरत्वेन तत्र तात्पर्याभावात्, किन्तु वाग्धेन्वादिवत् सर्वज्ञत्वादिगुणविशिष्टतया जगत्कारणं परमाण्वादि वा जीवो वा उपास्य इति मीमांसकाः । अस्ति नित्यज्ञानादिमानीश्वरः सर्वज्ञः पृथिव्यादिकार्यलिङ्गानुमितः, स च जीवाद्भिन्न एवेति तार्किकाः । क्षणिकः सर्वज्ञ इति सौगताः । क्लेशकर्मविपाकाशयैरपरामृष्टो नित्यज्ञानरूपः प्रधानांशसत्त्वगुणप्रतिफलिततया सर्वज्ञः संसारिपुरुषविलक्षण एवेति पातञ्जलाः । अद्वितीयपरमानन्द एव ब्रह्म, तच्च जीवस्य वास्तवं स्वरूपं मायया च सर्वज्ञत्वादिविशिष्टं जगदुपादानं निमित्तं चेति औपनिषदाः ।

ननु, उक्तक्रमेण सिद्धे जीवब्रह्मणोरैक्ये जीवस्यासंसारित्वे च अलं न साङ्ख्यमित्याद्युत्तरश्लोकेन इत्याशङ्क्याह—**एवं तावदिति** । न साङ्ख्यमित्यादिश्लोकमवतारयितुं तन्निरस्याशङ्कामाह—**नन्विति** । अथ मदभिमतमेव त्वयोदाहृतं न तु

---

१. खगयोर्निर्धारयितव्य इति ।

२. तयोरेव ऐक्यमभ्युपपद्यत इति ।

मदनभिमतं जीवब्रह्मणोरनैक्यप्रतिपादकं वाक्यं[1] तत्राह—**जगत्कारणं च प्रधानमिति**। एवं च न चेतनाचेतनयोरैक्यमिति सुचिरं विभाव्य संतोष्टव्यमायुष्मन्नभवदनभिमतमुक्तम्, अनुक्तं चेति भावः[2]। एवमैक्याभावे पाशुपतमतमुदाहरति—**पशुपतिरेवेति**। न हि कचित् श्रुतमुपपद्यते वा उपास्योपासकयोरैक्येन उपासनेति भावः। ऐक्याभावसाधकत्वेन मतान्तरमाह—**भगवानित्यादिना**। ननु, भवत्वेवं तथापि जीवब्रह्मणोरैक्याभावे किं साधकमत आह—**तेन कार्यत्वादिति**। **नित्य इति**। परिणामी नित्यस्य शुद्धजीवेन सहात्यन्ताभेदाभावादस्मिन्मतेऽपि न जीवब्रह्मणोरत्यन्ताभेदसिद्धिरिति भावः।—**नास्तीति**। एवं च केन सहाभेदः, न हि शशविषाणेन सह कस्यचिद्भेद इति कश्चिद्वदतीति भावः। आदिपदग्राह्यमाह—**अस्तीति**। अत्यन्तभिन्नयोरभेदे गजगगनयोरप्यभेदः स्यात्, अतो न जीवब्रह्मणोरैक्यमिति भावः। **क्षणिक इति**। न हि क्षणिककूटस्थयोरभेदस्ततो न जीवब्रह्मणोरैक्यमिति भावः।—**क्लेशकर्मेति**। न हि वास्तवसर्वज्ञत्ववास्तवाज्ञयोरभेद इति भावः।—**अद्वितीय इति**। ननु, भवन्मते जीवब्रह्मणोरैक्यं कथं सर्वज्ञत्वकिञ्चिन्मात्रज्ञत्वादिरूपवैधर्म्यादत आह—**माययेति**। एवं च सर्वज्ञत्वकिञ्चिज्ज्ञत्वादीनां मायिकत्वेनावास्तवत्वमित्यर्थः।

**एवं वादिविप्रतिपत्तिभिः सन्दिग्धे तत्पदार्थे औपनिषदपक्षस्य परिशेषेण तन्निर्णयायाह भगवान्—**

**न साङ्ख्यं न शैवं न तत्पाञ्चरात्रं**
**न जैनं न मीमांसकादेर्मतं वा।**
**विशिष्टानुभूत्या विशुद्धात्मकत्वात्**
**तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ४ ॥**

* आदिशब्देनानुक्तानां सङ्ग्रहः। न तावदचेतनं जगदुपादानम्, 'तदैक्षत बहु स्यां प्रजायेय' (छां. ६।२।३) इति ईक्षणपूर्वकसृष्टिश्रवणात्, 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छां. ६।३।२) इति जीवात्मत्वव्यपदेशात्, 'यस्मिन्विज्ञाते सर्वमिदं विज्ञातं भवति' (मुं. १।१।३) इति चैकविज्ञानेन सर्वविज्ञानप्रति-

---

१. क१पुस्तके जीवब्रह्मणोरैक्यप्रतिपादकत्वमिति।

२. गपुस्तकेऽनुक्तं वेति भाव इति।

ज्ञानात्, प्रधानज्ञानेन च तद्प्रकृतिकानां पुरुषाणां ज्ञातुमशक्यत्वात्, 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि' (छां. ६।८।७) इति च तद्भेदस्य नवकृत्वोपदेशात्, 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' (तै. २।१) इति श्रुत्यन्तरादचेतनस्य जगत्कारणत्वे विचित्ररचनानुपपत्तेः, प्रधानमहदादेरप्रामाणिकत्वाच्च न साङ्ख्यमतं साधु। एवं पाशुपतं पाञ्चरात्रिकं जैनं च मतं श्रुतियुक्तिबाधितत्वादयुक्तम्। न च विधिशेषत्वाच्छ्रुतिर्न ब्रह्म प्रतिपादयतीति मीमांसकमतं युक्तमसिद्धत्वाद्विधिशेषत्वस्य। न चार्थवादाधिकरणन्यायाद्विधिशेषत्वम्, वैषम्यात्। स्वतःप्रयोजनवदर्थप्रतिपादकानां 'वायुर्वै क्षेपिष्ठा देवता' (तै. सं. २।१।१।१) इत्येवमादीनां स्वाध्यायविधिग्रहणान्यथानुपपत्त्या प्रयोजनवदर्थपरत्वे कल्पनीये शब्दभावनेतिकर्तव्यतांशसाकांक्षस्य विधेः सम्प्रदानभूतदेवतादिस्तुतिद्वारेण तदंशपूरकत्वान्नष्टाश्वदग्धरथन्यायेन तदुभयैकवाक्यता इत्यर्थवादाधिकरणे निर्णीतम्। वेदान्तवाक्यजन्यज्ञानाच्च साक्षादेव परमानन्दप्राप्तिर्निःशेषदुःखनिवृत्तिश्च पुरुषार्थो लभ्यत इति निराकांक्षत्वान्नान्यशेषत्वसम्भावना, प्रत्युत विधय एवान्तःकरणशुद्धिद्वारा तच्छेषतां भजन्त इति। तस्मात्प्रयोजनवदबाधिताज्ञातज्ञापकत्वेन वेदान्तानां स्वत एव प्रामाण्यादस्त्येव ब्रह्मेति न मीमांसकमतसिद्धिः। तार्किकादीनां च मतं 'तत्त्वमसि' (छां. ६।८।७), 'अहं ब्रह्मास्मि' (बृ. आ. १।४।१०), 'अयमात्मा ब्रह्म' (सैव. २।५।१९), 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. २।१) इत्यादिश्रुतिबाधितम्, 'एकमेवाद्वितीयं ब्रह्म' (छां. ६।२।१), 'नेह नानास्ति किञ्चन' (बृ. आ. ४।४।१९) इत्यादिश्रुतिबाधितं च। भिन्नाभिन्नत्वं क्षणिकत्वं च 'आकाशवत्सर्वगतश्च नित्यः' इत्यादिश्रुतिबाधितम्। अत्र च सर्वेषां मतस्यासत्त्वे प्रतिज्ञाते विशुद्धात्मकत्वादिति हेतुः। निर्विकल्पकाद्वितीयचैतन्यरूपत्वादित्यर्थः। अत्र हेतुः विशिष्टानुभूत्येति। विशिष्टा सविकल्पकानुभूतिभ्यो व्यावृत्ता या तत्त्वमस्यादिवाक्यजन्याखण्डानुभूतिस्तयेत्यर्थः। तेन सर्वव्यापकमद्वितीयं परमानन्दबोधरूपं च ब्रह्मेति सिद्धम्॥ ४॥

उक्तमतदूषणाय चतुर्थश्लोकमवतारयति—**एवं वादीति**। क्रमप्राप्तं साङ्ख्यमतं प्रथमतो दूषयति—**न तावदचेतनमिति**। छान्दोग्यवाक्येन समाधत्ते—**तदैक्ष-**

**तेति**। पुनश्छान्दोग्यवाक्येन दूषणमाह—**अनेनेति**। **जीवात्मनेति** सामानाधिकरण्याज्जीवात्मलाभादचेतनप्रधानव्युदास इति भावः। 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इत्यादिना यदेकविज्ञानेन सर्वविज्ञानमुक्तं मुण्डके तद्विरुद्धं भवति प्रधानोपादानकत्व इत्याह—**यस्मिन्नित्यादिना**। विरोधं प्रकटयति—**प्रधानेति**। छान्दोग्यवाक्यमाह—**ऐतदात्म्यमिति**। तैत्तिरीयकवाक्यमुदाहरति—**तस्माद्वा इति**। युक्तिमाह—**अचेतनस्येति**। साङ्ख्यमतदूषणमुपसंहरति—**प्रधानेति। अप्रामाणिकत्वादिति**। प्रमाणं, वेदः, तदबोधितत्वादित्यर्थः। मतत्रयमेकदूषणेन दूषयितुमाह—**एवमिति**। श्रुतिरत्र 'तत्त्वमसि,' 'अहं ब्रह्मास्मि', 'तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते', 'नेह नानाऽस्ति किञ्चन' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यादिका। युक्तिश्च, लाघवादभिन्ननिमित्तोपादानकत्ववत् चैतन्यैक्ये सिद्धे तस्य चौपाधिकभेदेनैव व्यवस्थोपपत्तौ वास्तवभेदकल्पनमयुक्तं, कूटस्थचैतन्यस्य मायां विना जगत्कारणत्वानुपपत्तिः, तद्वज्जीवस्यापि कर्तृत्वादेः सत्यत्वेऽनिर्मोक्षप्रसङ्ग इत्यादिका। भिन्नाभिन्न इति पक्षे च विरुद्धयोर्भेदतदभावयोरेकत्रासत्वादेतदन्ययोर्भेदाभेदयोरङ्गीकारे परिभाषामात्रत्वाचेत्यनुसन्धेयम्। मीमांसकमतमनूद्य दूषयति—**न च विधीत्यादिना**। तर्हि अर्थवादाधिकरणविरोध इत्याशङ्क्य परिहरति—**न चेत्यादिना**। 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमित्युच्यते' इत्यत्र कार्यपरवाक्यानां सप्रयोजनानामेव प्रामाण्यं, तदितरेषां निष्प्रयोजनानामर्थवादादीनामप्रामाण्यमित्याशङ्क्य गुणवादस्त्वित्यादिना विधिस्तावकतया प्रयोजनसाकाङ्क्षाणामर्थवादादीनां प्रामाण्यमित्यर्थवादाधिकरणे सिद्धं, अतस्तद्विरोध इत्यर्थः। तत्र प्रयोजनविरहिणामप्रामाण्यप्रतिपादनेऽपि नात्र तथा, परमपुरुषार्थप्राप्तिसाधनत्वादात्मज्ञानस्यैवेत्याह[1]—**वैषम्यादित्यादिना**। न केवलमन्यशेषता किन्तु वैपरीत्यमपीत्याह—**प्रत्युतेति। तार्किकादीनां चेति**। आदिपदात्पूर्वमनुक्तमपि वैशेषिकमतम्, उक्तं च पातञ्जलमतं ग्राह्यम्। पातञ्जलमतस्यापि एता उक्ताः श्रुतयो बाधिकास्तन्मते जीवेश्वरजगतां सत्यत्वादिति। **'तत्त्वमसि'** इति छान्दोग्यस्थम्। **'अहं ब्रह्मास्मि'** इति बृहदारण्यकस्थं। **'अयमात्मा ब्रह्म'** इति च। **'सत्यं ज्ञानं'** इति तैत्तिरीयकस्थम्। जैनत्रिदण्डिनो मतं दूषयति—**एकमिति**। इदं वाक्यं छान्दोग्यस्थम्। **'नेह नाना'** इति बृहदारण्यकस्थं मनसैवानुद्रष्टव्यमित्यादि। सौगतमतमपाकरोति—**क्षणिकत्वं चेति**। आदिपदात् 'नित्यं विज्ञानमानन्दं ब्रह्म' इत्यादिकं ग्राह्यम्। ज्ञातस्य क्षणिकत्वकल्पनेऽनन्तकोटिज्ञानतद्धंसादिकल्पनमपि बाधकम्। श्रुतिप्रामाण्यं चापौरुषेयत्वेन दोष-

१. खगयोरात्मज्ञानस्येव इति पाठः स न युक्तः।

वत्पुरुषाप्रणीतत्वादास्तिकनास्तिकसाधारणतया साधितमित्यवधेयम् । विशिष्टशब्दस्य व्यावृत्त्यर्थकत्वाभिप्रायेणार्थमाह—**विशिष्टेति** । ( इति ) चतुर्थः श्लोकः ।

**ननु 'स य एषोऽणिमा' ( छां. ६।८।१९ ), 'अणोरणीयान्' ( तै. आ. १०।१२।१, कठ. १।२।२०, श्वेता. ३।२० ) इति ब्रह्मणोऽणुत्व-श्रुतेः, 'अङ्गुष्ठमात्रः पुरुषः' (कठ. २।४।१२), 'आराग्रमात्रो ह्यवरोपि दृष्टः' ( श्वेता. ५।८ ) इत्यादिश्रुतिप्रतिपादिताणुजीवाभिन्नत्वाच न ब्रह्मणः सर्वव्यापकत्वमित्याशङ्क्य 'ब्रह्मैवेदममृतं पुरस्तात् ब्रह्म पश्चात् ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्व-मिदं वरिष्ठम्' ( मुं. २।२।११ ), 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' (बृ. आ. २।५।११) इत्याद्याः श्रुतयो निर्विशेषमेव ब्रह्म प्रतिपादय-न्तीति पूर्वोक्तमेव द्रढयन्नाह—**

**न चोर्ध्वं न चाधो न चान्तर्न बाह्यं**
**न मध्यं न तिर्यङ् न पूर्वापरा दिक् ।**
**वियद्व्यापकत्वादखण्डैकरूप-**
**स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ५ ॥**

**श्लोकार्थः । वियद्व्यापकत्वात् वियद्वद्व्यापकत्वात् 'आकाशवत्सर्व-गतश्च नित्य' इति श्रुतेः, वियतो व्यापकत्वादिति वा 'ज्यायानाका-शात्' ( शत. ब्रा. १०।६।३।२ ), 'महतो महीयान्' ( कठ. २।२० ) इ-त्यादिश्रुतेः । जीवस्यापि[1] सकलदेहव्यापिचैतन्योपलब्ध्या महत्त्वेऽपि, उपाधिधर्माध्यासेनाराग्रमात्रत्वाभिधानात्, 'बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः' (श्वेता. ५।८) इति श्रुतेर्ब्रह्मणश्च सूक्ष्मत्वाभिप्रायेणाणुत्वव्यपदेशात् । शेषमतिरोहितार्थम् ॥ ५ ॥**

पञ्चमश्लोकमवतारयति—**नन्वित्यादिना । स (य) एष** इति बृहदारण्य-कस्थम् ( ? छान्दोग्यस्थम् ), **अणोरणीयान्** इति तु श्वेताश्वतरतृतीयाध्यायस्थम् । कठवल्लीप्रथमाध्यायस्य च ब्रह्मणोऽणुत्वप्रतिपादिकां श्रुतिमुदाहृत्य जीवाणुत्वप्रतिपा-दिकां श्रुतिमाह—**अङ्गुष्ठमात्र इति** । इदं च वाक्यं श्वेताश्वतरस्थं कठव-ल्लीस्थं च । **वियद्व्यापकत्वादिति** । व्याकरोति—वियद्(वद्)व्यापकत्वात्

१. क१पुस्तके जीवस्येति ।

इति । **आराग्रमात्र** इति च श्वेताश्वतरपञ्चमाध्यायस्थम् । इदमेव साधयति—**आकाशवदिति** । न चाकाशदृष्टान्तेनात्मनः सर्वगतत्वादिसाधने आकाशस्यापि नित्यत्वमापतितं तथा च द्वैतापत्तिरिति वाच्यं, यावत्कालस्थायित्वरूपनित्यत्वेऽपि[1] कालनाशोत्तरं तस्य नाशेन द्वैतापत्तेः । न चैवं ब्रह्मणोऽपि नाशः स्यादिति वाच्यं 'अविनाशी वा अरेऽयमात्मा' इत्यादिश्रुतिविरोधात् । एकस्य वाक्यस्योभयपरत्वे वाक्यभेदापत्तेः । वस्तुतस्तु नेदं वाक्यमाकाशनित्य(त्व)प्रतिपादकतर्कपरमपि[2] तु तदर्थापत्तिः । सा द्वैतश्रुतिः, आकाशोत्पत्तिविरोधकश्रुतिजन्यस्य भावस्य विनाशप्रतिपादकतर्कसहकृत 'ज्यायानाकाशात्' इत्यादिश्रुत्या, पराहता इति दिक्[3] । तत्पदाध्याहारापरितोषमाशङ्क्याह—**वियतो व्यापकत्वादिति वेति** । बृहदारण्यकवाक्यमाह—**ज्यायानिति** । श्वेताश्वतरकठवल्लीस्थमाह—**महत इति** । मध्यमपरिणामत्वे विनाशित्वापत्तिरतः 'अङ्गुष्ठमात्र' श्रुतिमुपेत्य 'आराग्रमात्र' श्रुतितर्कविरोधेनोपचारितया व्याकरोति—**जीवस्यापीति** । उपचारे बीजमाह—**बुद्धेर्गुणेनेति** । ब्रह्मणोऽणुत्वप्रतिपादकायाश्च 'य एषोऽणिमा' इत्यादिश्रुतेरविरोधमाह—**ब्रह्मणश्चेति** । इति पञ्चमः श्लोकः ।

**ननु[4], ब्रह्मणो जगदुपादानत्वादुपादानोपादेययोश्चाभेदाद्विचित्रजगदभिन्नत्वेन ब्रह्मणः दुःखरूपत्वात् न तदभिन्नत्वेन जीवस्य परमपुरुषार्थप्राप्तिरित्याशङ्क्य ब्रह्मणः स्वप्रकाशपरमानन्दरूपत्वान्निखिलजगद्भ्रमाधिष्ठानत्वेन कारणत्वव्यपदेशादध्यस्तेन च समं सम्बन्धाभावान्न[5] तत्रानर्थलेशोप्यस्तीत्याह—**

**न शुक्लं न कृष्णं न रक्तं न पीतं**
**न कुब्जं न पीनं न ह्रस्वं न दीर्घम् ।**
**अरूपं तथा ज्योतिराकारकत्वात्**
**तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ६ ॥**

---

१. गपुस्तके नित्यत्वे सत्त्वेऽपीति ।

२. क१खपुस्तकयोः प्रतिपादकमिति ।

३. क१पुस्तके नित्यत्वप्रतिपादकमपि तु तदर्थो या आकाशोत्पत्तिबाधकश्रुतिः जन्यभावस्य जनकस्य च विनाशप्रतिपादकतर्कसहकृत 'ज्यायानाकाशा'दित्यादिश्रुत्या पराहता इति दिक् इति पाठः स न सम्यगर्थबोधकः । गपुस्तके विनाशप्रतिपादकतर्कसहकृत इत्येतत्समासो न वर्तते ।

४. खगयोर्ननु स्यादेतद्ब्रह्मणो जगदुपादानत्वादिति ।

५. गपुस्तके अध्यस्तेन च सह सम्बन्धाभावादिति ।

कुब्जमणु। पीनं महत्। तेनाणु महत् ह्रस्वं दीर्घं चेति चतुर्विधपरिमाणनिषेधात् द्रव्यत्वप्रतिषेधः[1]। रूप्यत इति रूपं प्रमेयम्। न प्रमेयं अरूपम्। तेन सर्वेषामेव द्रव्यगुणकर्मादिपदार्थानां तत्तद्वाद्यभ्युपगतानां निषेधः। तथा च श्रुतयः—'अस्थूलमनण्वह्रस्वमदीर्घमलोहितम्' (बृ. आ. ३।८।८) इत्याद्याः 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्' (कठ. १।३।१५) इत्याद्याश्च सर्वानर्थशून्यं परमात्मस्वरूपं प्रतिपादयन्ति। श्रौतस्याप्यर्थस्य न्यायेन निर्णयाय हेतुमाह–ज्योतिराकारकत्वादिति। स्वप्रकाशज्ञानरूपत्वेनाप्रमेयत्वात्, प्रमेयत्वे घटादिवज्जडत्वापत्तेः, 'एतदप्रमेयं ध्रुवम्' (बृ. आ. ४।४।२०) इत्यादिश्रुतेश्चेत्यर्थः॥ ६॥

षष्ठं श्लोकमवतारयति[2]—**नन्वित्यादिना**। द्रव्यत्वं निषिध्य प्रमेयत्वं निषेधति—**रूप्यत इति रूपमिति**। **अस्थूलमिति** बृहदारण्यकस्थं, **अशब्दमिति** कठवल्लीस्थम्। श्रौतेऽर्थे हेतुर्निरर्थकस्तत्राह—**श्रौतस्येति**। तर्कमाह—**प्रमेयत्व इति**। न केवलमर्थसिद्धः किन्तु श्रौतोऽपीत्याह—**एतदप्रमेयमिति**। इदं च वाक्यं बृहदारण्यकस्थम्। इति षष्ठः श्लोकः।



१. कपुस्तके द्रव्यप्रतिषेध इति।

२. क१पुस्तके श्लोकमुदाहरतीत्यशुद्धः पाठः।

# तृतीयो विभागः ।

## तत्त्वमसिवाक्यार्थनिर्णयः ।

ननु, कस्य ब्रह्मभाव उपदिश्यते, ब्रह्मणोऽब्रह्मणो वा । नान्त्यः, तस्य जडत्वादसत्त्वाच्च, न प्रथमः उपदेशानर्थक्यात्, ब्रह्मभावस्य स्वतःसिद्धत्वात् । जीवस्य स्वतो ब्रह्मभावेऽप्यविद्याव्यवधानं ज्ञानेन निवर्त्यत इति चेत्, न, अविद्यानिवृत्तेरात्मभिन्नत्वे द्वैतापत्तेर्ब्रह्मणोऽसिद्धिप्रसङ्गात् । तदुक्तं वार्तिके—( बृ. आ. भा. वा. २।४।१४ )

'अव्यावृत्ताननुगतं वस्तु ब्रह्मेति भण्यते ।
ब्रह्मार्थो दुर्लभोऽत्र स्याद्द्वितीये सति वस्तुनि ॥' इति ॥

अभिन्नत्वे चोपदेशानर्थक्यमित्युक्तम् । अत्र किं परमार्थतः फलाभावमभिप्रैषि किंवा प्रतीतितोऽपि । तत्राद्यमिष्टापत्त्या परिहरति—

न शास्ता न शास्त्रं न शिष्यो न शिक्षा
न च त्वं न चाहं न चायं प्रपञ्चः ।
स्वरूपावबोधो विकल्पासहिष्णु-
स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ७ ॥

शास्ता उपदेशकर्ता गुरुः । शास्त्रमुपदेशकरणम् । शिष्य उपदेशकर्म । शिक्षा उपदेशक्रिया । त्वं श्रोता । अहं वक्ता । अयं सर्वप्रमाणसन्निधापितः प्रपञ्चो, देहेन्द्रियादिरनर्थः, परमार्थतो नास्तीत्यर्थः । द्वितीयं निराकरोति—स्वरूपेति । अयमर्थः—यद्यप्यविद्यानिवृत्तिरात्मानात्मा वेति विकल्पने किमपि फलं निरूपयितुं न शक्यते तथापि स्वरूपावबोधो विज्ञानफलमनुभूयते[२] । न चैतत्कथमिति विकल्पनीयं सर्वद्वैतोपमर्देन विकल्पासहिष्णुत्वात् । न हि दृष्टेऽनुपपन्नं नाम । तथा च श्रुतिः ( १ गौ. का. २।३२)

---

१. खगयोर्जडत्वादसत्त्वापत्तेरिति ।

२. कपुस्तके ज्ञानफलमनुभूयत इति पाठः ।

'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता' ॥

'ब्रह्म वा इदमग्र आसीत्, तदात्मानमेवावेदहं ब्रह्मास्मीति, तस्मात्तत्सर्वमभवत्' (बृ. आ. १।४।७) इत्याद्या पूर्वमपि ब्रह्मस्वरूपस्यैव सतो जीवस्य ज्ञानाद्ब्रह्मभावं दर्शयति सर्वं च द्वैतं वारयति ॥ ७ ॥

सप्तमश्लोकावतरणिकायां शङ्कते—**ननु कस्येति** । ननु 'तत्त्वमसि' आदिवाक्यानां न जीवस्य ब्रह्मभावोपदेशमात्रं फलम्[1], अपि तु अज्ञाननिवृत्तिरित्याशङ्कते—**जीवस्येत्यादिना** । ब्रह्मणः कथमसिद्धिप्रसङ्ग[2]स्तत्राह—**तदुक्तमिति** । उक्ताक्षेपास्कन्दकत्वेन श्लोकमवतारयति—**अत्र किमिति** । न चायमितिपदस्य पदार्थमाह—**सर्वप्रमाणेति** । 'किंवा प्रतीतितोऽपि' इत्यनेन य उक्तः पक्षस्तं दूषयति—**द्वितीयं निराकरोतीति** । इति सप्तमः श्लोकः ।

नन्वात्मनः स्वप्रकाशरूपत्वे सर्वदा समाने जाग्रत्स्वप्नसुषुप्त्यादिव्यवस्था कथम् । न च भ्रान्त्यैव व्यवस्थेति वाच्यम्, तथा सति सर्वस्यैव स्वप्नत्वापत्तेरिति चेत्, न, लक्षणतस्त्रयाणामपि स्वप्नत्वेऽपि प्रतिभासतोऽविद्यात्मकविशेषसम्भवादसद्विलक्षणत्वेन तु सविशेषत्वाद्व्यवस्थोपपत्तेः । परमार्थतस्तु न कापि व्यवस्थेत्याह—

न जाग्रन्न मे स्वप्नको वा सुषुप्ति-
र्न विश्वो न वा तैजसः प्राज्ञको वा ।
अविद्यात्मकत्वात्त्रयाणां तुरीय-
स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ८ ॥

अष्टमश्लोकमवतारयितुं भूमिमारचयति[3]—**नन्वात्मन इति** । इष्टापत्त्या परिहरति—**न, लक्षणत इति** । **लक्षणं**, आविद्यकत्वम् । **प्रतिभासतः**, ज्ञानतः । स्वप्नवदसत्त्वे कथं विलक्षणत्वं[4] तत्राह—**असद्विलक्षणत्वेन त्विति** । तर्हि किं सविशेषत्वं पारमार्थिकं तत्राह—**परमार्थतस्त्विति** ।

---

१. गपुस्तके उपदेशमात्रं प्रयोजनमिति ।
२. क१पुस्तके असिद्धिसङ्ग इति पाठः स हस्तदोष इव दृश्यते ।
३. तस्मिन्नेव भूमिभूमिमाचरति इति पाठः स हस्तदोष एव ।
४. तस्मिन्नेव कथं विलक्षणमिति पाठः स न युक्तः ।

अत्र लयक्रमेण पौर्वापर्यनिर्देशः। तथा हि—अस्मन्मते पदार्थो द्विविधः, दृक् दृश्यश्च, अन्यवादिपरिकल्पितानां पदार्थानामत्रैवान्तर्भावात्। तत्र दृक्पदार्थ आत्मा पारमार्थिक एकः सर्वदैकरूपो[1]ऽप्यौपाधिकभेदेन त्रिविधः, ईश्वरो जीवः साक्षी चेति। तत्र कारणीभूताज्ञानोपाधिरीश्वरः, अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानोपहितो जीवः। प्रपञ्चितं चैतदधस्तात्। अविद्याप्रतिबिम्बेश्वरपक्षे बिम्बचैतन्यं, बिम्बेश्वरपक्षे च बिम्बप्रतिबिम्बमुखानुगतमुखस्वरूपवज्जीवेश्वरानुगतं सर्वानुसन्धातृ चैतन्यं, साक्षीत्युच्यते। वार्तिककारमते त्वीश्वर एव साक्षीति द्वैविध्यमेव जीवेश्वरभेदेन दृशः। तत्रेश्वरोऽपि त्रिविधः। स्वोपाधिभूताविद्यागुणत्रयभेदेन विष्णुब्रह्मरुद्रभेदात्। कारणीभूतसत्त्वगुणावच्छिन्नो विष्णुः पालयिता। कारणीभूतरजउपहितो ब्रह्मा स्रष्टा। हिरण्यगर्भस्तु महाभूतकारणत्वाभावान्न ब्रह्मा तथापि स्थूलभूतस्रष्टृत्वात्क्वचिद्ब्रह्मेत्युच्यते। कारणीभूततमउपहितो रुद्रः संहर्ता। एवं चैकस्यैव चतुर्भुजचतुर्मुखपञ्चमुखाद्याः पुमाकाराः श्रीभारतीभवान्याद्याश्च स्त्र्याकाराः। अन्ये च मत्स्यकूर्मादयोऽनन्तावताराः लीलयैवाविर्भवन्ति भक्तानुग्रहार्थमित्यवधेयम्,

'चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः।
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना॥' इति श्रुतेः[2]॥

जीवोऽपि त्रिविधः, स्वोपाध्यवान्तरभेदेन विश्वतैजसप्राज्ञभेदात्। तत्राविद्यान्तःकरणस्थूलशरीरावच्छिन्नो जाग्रदवस्थाभिमानी विश्वः। स एव स्थूलशरीराभिमानरहित उपाधिद्वयोपहितः स्वप्नाभिमानी तैजसः। शरीरान्तःकरणोपाधिद्वयरहितोऽन्तःकरणसंस्कारावच्छिन्नाविद्यामात्रोपहितः सुषुप्त्यभिमानी प्राज्ञः। एतेषां च स्वतन्त्रोपाधिभेदाभावेन स्वतन्त्रभेदाभावेऽप्यवान्तरोपाधिभेदादेकत्वेऽप्यवान्तरभेदो व्यवह्रियते। साक्षी तु सर्वानुसन्धाता सर्वानुगतस्तुरीयाख्य एकविध एव। तत्रोपाधिभेदेनापि न क्वचिद्भेदस्तदुपाधेरेकरूपत्वात्। अविद्यातद्व्याप्यतत्कार्यात्मकः प्रपञ्चो दृश्यपदार्थः। तस्य चापारमा-

---

१. गपुस्तके एकः सर्वगतः सर्वदैकरूप इति।
२. खगयोरयं श्लोको न दृश्यते।

र्थिकत्वेऽपि व्यावहारिकसत्त्वाभ्युपगमात् न स्वाप्निकपदार्थवन्निरूपणं व्यर्थम्, उपासनादावुपयोगादिति। सोऽपि त्रिविधः, अव्याकृतामूर्तमूर्तभेदात्[1]। तत्र साभासाविद्या मूर्तामूर्तप्रपञ्चबीजशक्तिरूपा तदजन्यत्वेऽपि[2] तन्निवृत्तौ निवर्तमानत्वेन तद्व्याप्यैश्चैतन्यतत्सम्बन्धजीवेश्वरविभागचिदाभासैः सहानादित्वादव्याकृतमित्युच्यते। सा च स्वयं जडाऽप्यजडेन चिदाभासेनोज्ज्वलितपूर्वपूर्वसंस्कारजीवकर्मप्रयुक्ता सती शब्दस्पर्शरूपरसगन्धात्मकान्याकाशवायुतेजोजलपृथिव्याख्यानि पञ्चमहाभूतानि जनयति। तत्र पूर्वपूर्वभूतभावापन्नाया अविद्याया उत्तरोत्तरं प्रति कारणत्वात्[3] पूर्वपूर्वभूतगुणानामुत्तरोत्तरभूतेष्वनुप्रवेशः। एवमविद्यात एवान्धकारोऽपि भावरूप एवावरणात्मा चाक्षुषज्ञानविरोधी आलोकनाश्यश्च झटिति महाविद्युदादिवदाविर्भवति तिरोभवति चेति सिद्धान्तः। संसारहेतुदेहोपादानत्वाभावाच्च न श्रुतिषु सृष्टिप्रक्रियायामाम्नायत इत्यविरोधः। दिक्कालौ त्वप्रामाणिकत्वान्नोक्तौ, आकाशस्यैव दिग्व्यवहारजनकत्वव्यवस्थासम्भवात् 'दिशः श्रोत्रम्' (बृ. आ. ३।२।१३) इति श्रुतेश्च। कालस्त्वविद्यैव तस्या एव सर्वाधारत्वादिति। अयं चाव्याकृतपदार्थ ईश्वरोपाधिः।

प्रसङ्गात् वैशेषिकादिवत्पदार्थं निरूपयति—**तथा हीति**। दृक् चेतनो ज्ञानात्मकः, दृश्यस्तदितरत्वाज्जडः। ननु, वैशेषिकाः अभावसप्तकाः पदार्थाः सप्तेति वदन्ति, अक्षपादाचार्यास्तु षोडश, तथा च कथं पदार्थद्वैविध्याङ्गीकारे निस्तारस्तत्राह—**अन्यवादीति**। इदानीं दृक्पदार्थं विभजते—**तत्र दृक्पदार्थ आत्मा पारमार्थिक एक इत्यादिना**। पारमार्थिकत्वं, कालत्रयाबाध्यत्वम्। एकः पारमार्थिकश्चेत्तर्हि कथं जीवेश्वरादिव्यवस्था तत्राह—**सर्वदैकरूपोऽपीति**। अत्रार्थे 'यथा स्वयंज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' इति श्रुतिः प्रमाणम्। याज्ञवल्क्यस्मृतिरपि (प्रायश्चित्ताध्यायः १४४)—

'आकाशमेकं हि यथा घटादिषु पृथग्भवेत्।
तथात्मैकोऽप्यनेकश्च जलधारास्विवांशुमान्॥' इति॥

---

१. कपुस्तके अव्याकृतमूतामूर्तभेदादिति पाठः।
२. तस्मिन्नेव तज्जन्यत्वेऽपीति पाठः स न सम्यगर्थबोधकः।
३. खगपुस्तकयोरुत्तरोत्तरं कार्यं प्रति कारणत्वादिति।

एवमत्रार्थे अन्या अपि श्रुतयः स्मृतयश्च ऊह्याः। क्रमप्राप्तमीश्वरं लक्षयति—**कारणीभूताज्ञानोपाधिरिति**। कारणीभूतं यदज्ञानं तदेवोपाधिर्यत्र सः। तथा जीवेश्वरलक्षणं विधाय साक्षिलक्षणं विधत्ते—**अविद्येति**। संक्षेपशारीरकमत इत्यर्थः। **बिम्बचैतन्यमिति**। साक्षीत्यनेनान्वयः। विवरणकारैकजीववादिनो मतमनुगतीकृत्याह—**बिम्बेश्वरपक्षे चेति**। ईश्वरपदार्थं विभजते—**तत्रेश्वरोऽपीति**। उक्तं विवृणोति—**कारणीभूत इत्यादिना**। ननु, हिरण्यगर्भोऽत्र ब्रह्मा तदतिरिक्तो वा तत्राह—**हिरण्यगर्भस्त्विति**। **महाभूतेति**। सूक्ष्ममहाभूतेत्यर्थः। **एकस्यैवेति**। ईश्वरस्येति शेषः। ईश्वरस्य पुमाकारमूर्तीरुक्त्वा स्त्र्याकारमूर्तीराह—**श्रीभारतीभवान्याद्याश्चेति**। सर्वशक्तिमदवतारानुक्त्वा (? अल्पशक्तिमत्) अवतारानाह—**मत्स्येति**। ईश्वरत्रैविध्यमुपपाद्य जीवत्रैविध्यमुपपादयति—**जीवोऽपीति**। उक्तत्रिविधं जीवं विभजते—**तत्रेति**। एतेषां मध्य इत्यर्थः। विश्वलक्षणमाह[1]—**जाग्रदवस्थाभिमानी (जीव) इति**। **अविद्यान्तःकरणस्थूलशरीरावच्छिन्न इति** स्वरूपकथनं न तु लक्षणप्रविष्टम्। एवं **स्वप्नावस्थाभिमानी तैजसो (जीव) इति** लक्षणं, शेषं तु स्वरूपकथनपरम्। **उपाधिद्वयोपहितः** अविद्यान्तःकरणोपहितः। प्राज्ञलक्षणमाह—**सुषुप्त्यभिमानीति**। शेषं स्वरूपकथनार्थम्। तर्हि किं जीवेश्वराः स्वतन्त्रा न[2] इत्याह—**एतेषां चेति**। ननु जीवेश्वरवत् साक्षी कियत्प्रकारस्तत्राह—**साक्षी त्विति**। दृक्पदार्थं निरूप्य दृश्यं निरूपयति—**अविद्यातद्व्याप्येति**। ननु त्वन्मते आविद्यकपदार्थस्य स्वाप्निकपदार्थतुल्यत्वात् स्वाप्नपदार्थनिरूपणवदाविद्यकनिरूपणं विफलमत आह—**तस्य चेति**। निरूपणप्रयोजनमाह—**उपासनादाविति**। **सोऽपि** दृश्यपदार्थोऽपि। त्रयाणां मध्येऽव्याकृतपदार्थमाह—**तत्रेति**। साभासाऽविद्याऽव्याकृतमुच्यते इत्यन्वयः। तद्व्याप्यं, अविद्याव्याप्यम्। तच्च ग्रन्थकार एव वक्ष्यति—**तद्व्याप्यैश्चैतन्येत्यादिना**। सूक्ष्मात्तद्व्याप्यत्वे हेतुमाह—**तदजन्यत्वेऽपीत्यादिना**। **सा चेति**। अविद्येत्यर्थः। प्रपञ्चबीजशक्तिरूपत्वं यदव्याकृतस्योक्तं तदिदानीं प्रकटयति—**शब्देत्यादिना**। एवं चौपनिषदमते शब्दाद्यात्मक एव सूक्ष्माकाशादिर्न तु साङ्ख्यवत् शब्दादिगुणवदाकाशादेरुत्पत्तिरिति[3]। नन्वेवमपि शब्दाकाशयोस्तादात्म्याद्भवतु शब्दगुण आकाशः, एवं स्पर्शगुणो वायुर्न तु शब्दगुणा पृथिवी तत्राह—**तत्र पूर्वपूर्वेति**। एवं च कारणगुणक्रमेण पृथिव्यां शब्दगुणसिद्धिः। एवं वाय्वादावपीत्य-

---

१. क, खयोर्लक्षणमाहेत्येतावन्मात्रम्।

२. गपुस्तके तर्हि किं ईश्वरवत्त्रिविधो जीवः स्वतन्त्रो न इति पाठः।

३. क, खपुस्तकयोः शब्दादिगुणादाकाशादेरुत्पत्तिरिति।

वधेयम् । एवमप्यौपनिषदमते प्रसङ्गादन्धकारोऽपि भावरूप एव इति प्रतिपादयति—**एवमविद्यात इति**। तर्हि गगनादिवदन्धकारः किमिति सृष्टिप्रकरणे नोक्तस्तत्राह—**संसारेति**। दिक्कालौ किमिति नोक्तौ तत्राह—**दिक्कालाविति**। आकाश एव दिगिति भावः। **कालस्त्वविद्यैवेति**। वस्तुतस्तु अविद्यावच्छिन्नं चैतन्यमीश्वरः स एव कालः, पुराणादौ तथा दर्शनादिति।

**तानि च सूक्ष्माण्यपञ्चीकृतानि पञ्चमहाभूतान्यमूर्ताख्यानि कारणैक्यात्सत्त्वरजस्तमोगुणात्मकानि सत्त्वांशप्राधान्येन ज्ञानक्रियाशक्त्यात्मकमेकं स्वच्छद्रव्यं चित्ररूपमिव मिलित्वा जनयन्ति। तस्य च ज्ञानशक्तिप्रधानांशोऽन्तःकरणम्। तच्च बुद्धिर्मन इति द्विधोच्यते। क्रियाशक्तिप्रधानांशः प्राणः। स च पञ्चधा, प्राणोऽपानो व्यान उदानः समान इति। एवमेकैकभूतेभ्यो ज्ञानक्रियाशक्तिभेदात् प्रत्येकमिन्द्रियद्वयं जायते[1]। आकाशाच्छ्रोत्रवाचौ, वायोस्त्वक्पाणी, तेजसश्चक्षुःपादौ, अद्भ्यो रसनपायू, पृथिव्या घ्राणोपस्थौ चेति। अत्र 'तेजोमयी वाक्' (छां. ६।५।४) इति श्रुतेस्तैजसी वाक्, पादस्तु नाभस इति केचित्। शब्दव्यञ्जकेन्द्रियत्वेन तु श्रोत्रवद्वाचो नाभसत्वम्, पादचिकित्सया च चक्षुषः स्वास्थ्यदर्शनाच्चक्षुर्वत्पादस्यापि तैजसत्वमिति तु युक्तमुत्पश्यामः। तेजोमयत्वश्रुतिस्तु मनसः पञ्चभूतकार्यस्यापि[2] अन्नमयत्वश्रुतिरिव तदुपकार्यतया व्याख्येया। मनसश्च पञ्चभूतगुणग्राहकत्वेन तद्व्रत्त्वनिश्चयात्पञ्चभूतात्मकत्वमित्यन्यदेतत्[3]। एतेषामधिष्ठातारो देवा अपि ज्ञानक्रियाशक्तिप्रधानाः, दिगग्नी, वातेन्द्रौ, आदित्यविष्णू, वरुणमित्रौ, अश्विप्रजापती। तत्र ज्ञानशक्तिसमष्टिरन्तःकरणं, क्रियाशक्तिसमष्टिः प्राणः। शब्दस्पर्शरूपरसगन्धग्राहकाणि श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि पञ्चज्ञानेन्द्रियाणि। त्वक्चक्षुषी स्वग्राह्यगुणाश्रयद्रव्यमपि गृह्णीतः। श्रोत्रमपि चक्षुर्वत् गत्वा शब्दग्राहकम् दूरे शब्द इति प्रत्ययात्। वचनादानगतिविसर्गानन्दजनकानि वाक्पाणिपादपायूपस्थाख्यानि पञ्चकर्मेन्द्रियाणि। एतच्च सर्वं मिलित्वा सप्तदशकं लिङ्गं ज्ञानशक्ति-**

---

१. कपुस्तके इन्द्रियद्वयं द्वयं जायत इति।

२. तस्मिन्नेव मनसः पञ्चमहाभूततत्तत्कार्यस्य इति पाठः स न सम्यगर्थबोधकः।

३. तस्मिन्नेव पञ्चभूतग्राहकत्वेन तद्व्रत्त्वनिश्चयादित्यन्यदेतदिति, गपुस्तके च वाक्यान्ते इत्यन्यदिति।

**प्राधान्येन हिरण्यगर्भ इति क्रियाशक्तिप्राधान्येन सूत्रमिति चोच्यते। अयममूर्तपदार्थः कार्यत्वात् व्यष्टौ समष्टौ च जीवोपाधिरेव।**

अव्याकृतपदार्थमुक्त्वा अमूर्तपदार्थमाह—**तानि चेति**। जनयन्ति तानीति सम्बध्यते। **तस्य चेति**। ज्ञानक्रियाशक्त्यात्मकस्य स्वच्छद्रव्यस्येत्यर्थः। एवं च प्राणान्तःकरणयोरैक्यं धर्मभेदाद्भेद इति तत्त्वम्। द्वयं द्वयमित्यादि वा ज्ञानशक्तिप्राधान्येनैकं ज्ञानेन्द्रियं, क्रियाशक्तिप्राधान्येनापरं कर्मेन्द्रियमिति वाग्विभागः। तदेवाह—'आकाशात् श्रोत्रवाचौ' इत्यादिना। प्राचो मतमाह—**अत्रेति**। एषु मध्य इत्यर्थः। एकदेशिमतेऽस्वरसं व्यञ्जयन्स्वमतमाह—**शब्दव्यञ्जकेन्द्रियत्वेनेति**। एवं च प्रयोगः, वाग्नाभसी शब्दव्यञ्जकेन्द्रियत्वात् (?त्वेन)श्रोत्रवत्। अदृष्टादिसामान्यकारणे[1] व्यभिचारमाह—**इन्द्रियत्वादिति (?त्वेनेति)**। तर्कस्तु लाघवाख्य एव, धूमत्वावच्छेदेन वह्निजन्यत्ववत्, शब्दव्यञ्जकेन्द्रियत्वावच्छेदेन नाभसत्वमिति। तर्हि 'तेजोमयी वाक्' इति श्रुतेः का गतिरिति चेत्, तत्राह—**तेजोमयत्वश्रुतिस्त्विति**। तत्र 'अन्नमयं हि सौम्य मनः' इति श्रुतेरन्नमयत्वश्रवणेऽपि मनसः अन्नोपकार्यत्ववदत्रापि वाचस्तेजस उपकार्यत्वमित्यर्थः। ननु मनसः पञ्चभूतकार्यत्वे किं प्रमाणं तत्राह—**मनसश्चेति**। **तद्भूतत्वनिश्चयात्**, पञ्चभूतकार्यत्वनिश्चयात्। श्रुतिस्मृतिप्रसिद्धाधिष्ठातृदेवान्प्रसङ्गादाह—**एतेषामिति**। **ज्ञानक्रियेति**। ज्ञानशक्तिप्राधान्यं ज्ञानेन्द्रियाद्यधिष्ठातृदेवानां, क्रियाशक्तिप्राधान्यं कर्मेन्द्रियाधिष्ठातृदेवानामिति विवेकः। **दिगग्नीति**। श्रोत्रस्य दिगधिष्ठातृदेवता, 'दिशः श्रोत्रम्' इति श्रुतेः। एवं वागिन्द्रियस्याधिष्ठातृदेवता अग्निः। एवमुत्तरत्रापि यथासङ्ख्येन बोध्यम्। प्राणान्तःकरणयोर्विशेषमाह—**तत्रेति**। यथासङ्ख्येन शब्दादीनां ग्राहकाणीन्द्रियाण्याह—**शब्देत्यादिना**। त्वक्चक्षुषोस्तु द्रव्यग्राहकरूपविशेषमाह—**त्वक्चक्षुषीति**। चक्षुर्वत् श्रोत्रस्यापि पञ्चभूतकार्यत्वेन क्रियाशक्तिमत्त्वात् दूरदेशगमनसामर्थ्यं, अतो गत्वैव गृह्यते इत्याह—**चक्षुर्वदिति**। तर्कमाह—**दूरे शब्द इति**। सकार्याणि ज्ञानेन्द्रियाणि विविच्य कार्यसहितानि कर्मेन्द्रियाण्याह—**वचनेति**। एषु चेन्द्रियेषु प्रमाणं स्मृतयः। तासु याज्ञवल्क्यस्मृतिः (प्रायश्चित्ताध्यायः ९१–९२)

'गन्धरूपरसस्पर्शशब्दाश्च विषयाः स्मृताः।
नासिका लोचने जिह्वा त्वक् श्रोत्रं चेन्द्रियाणि तु॥
हस्तौ पायुरुपस्थश्च वाक् च पादौ च पञ्च वै।
कर्मेन्द्रियाणि जानीयान्मनश्चैवोभयात्मकम्॥'

---

१. क[1]पुस्तके अदृष्टादिसामान्याकारेणेति।

एवं च मनुस्मृत्यादावपि बोध्यम् । इदानीं प्रसङ्गादिहलोकपरलोकगामि लिङ्गशरीरं जीवोपाधिभूतमाह—**एतच्चेति** । तस्यापि द्वैविध्यमाह—**ज्ञानशक्तिप्राधान्येनेत्यादिना** । ननु, किमयं पदार्थो मूर्तं अमूर्तो वा तत्रान्त्यमेव सिद्धान्त्यभिमतमित्यभिप्रेत्याह—**अयममूर्तः पदार्थ इति** ।

**तानि च तथाभूतानि भूतानि भोगायतनं शरीरं भोग्यं च विषयमन्तरेण भोगं जनयितुमशक्नुवन्ति जीवकर्मप्रयुक्तत्वात् स्थौल्याय पञ्चीकृतानि भवन्ति । तत्र च प्रत्येकं पञ्चभूतानि द्विधा विभज्यते । तत्र एकैको भागश्चतुर्धा विभज्यते । तद्भागचतुष्टयं च स्वभागं विहाय इतरभूतचतुष्टयार्धभागेषु प्रविशति इति स्वस्यार्धभागेनेतरेषामष्टमभागेन च पञ्चीकरणान्मेलनेऽप्याधिक्यादाकाशादिशब्दप्रयोगः ।**

**तानि चेति** । पञ्चीकृतानि भवन्तीत्यतीनेनान्वयः । किमर्थं पञ्चीकरणं तत्राह—**स्थौल्यायेति** । स्थौल्यस्यापि फलमाह—**भोगायतनमित्यादि** । **शरीरं**, स्थूलशरीरं भोगस्य कारणमत आह—**जीवेति** । जीवकर्मप्रयुक्तत्वाद्भोगस्येत्यर्थः । सूक्ष्मस्य भोगायतनत्वं न सम्भवतीत्यत इदमुक्तमिति बोध्यम् । पञ्चीकरणमेवाह—**तत्र चेति** । ननु, भवतु नाम मेलनं तथाप्याकाशादिभागस्य[1] सर्वत्राविशिष्टत्वात् क्वचिदाकाशादिपदप्रयोगः क्वचिन्नेति वैचित्र्यं कुतस्तत्राह—**आधिक्यादिति** । यत्राकाशभागाधिक्यं[2] तत्र आकाशपदप्रयोगः, यत्र वायुभागाधिक्यं तत्र वायुपदप्रयोग इत्यर्थः । एवं तेजःप्रभृतिष्वपि बोध्यम् । अत्रार्थे बादरायणसूत्रं (२–४–२२) 'वैशेष्यात्तु तद्वादस्तद्वादः' इत्यपि प्रमाणं वेदितव्यम् ।

**अत्र 'त्रिवृतं त्रिवृतमेकैकां करवाणि' (छां. ६।३।३) इति श्रुतेः 'त्रिवृत्कुर्वत उपदेशात्' (ब्र. सू. २।४।२०) इति सूत्राच्च त्रयाणामेव मेलनप्रतीतेश्च त्रिवृत्करणमेव केचिन्मन्यन्ते ते वियदधिकरणन्यायेनैव निराकृताः । तथा हि तैत्तिरीयके 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद्वायुः' (तै. २।१।१) इत्यादिश्रुतेः छान्दोग्ये च त्रयाणां तेजोबन्नानां सृष्टिश्रवणेऽपि द्वयोरुपसंहारः, तेजसः प्राथम्यपदार्थधर्मापेक्षया आकाशवायुपदार्थयोर्बलीयस्त्वात्, छान्दोग्ये चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्, आकाशवाय्वोरचेतनयोर्ब्रह्मकार्यत्वस्यावश्यं वाच्यत्वात्[3] । तत्र पञ्चानामेव मेलनेऽप्यवयुत्या-**

१. खगयोराकाशभागस्येति ।
२. क१पुस्तके यत्राकाशफलभागाधिक्यमिति ।
३. कपुस्तके अवश्यं वक्तव्यत्वादिति ।

नुवादेन त्रिवृत्करणोपपत्तिः। त्रिवृतमेवेति तु कल्पनायां वाक्यभेद-प्रसङ्गः। 'त्रिवृत्कुर्वत उपदेशात्' (ब्र. सू. २।४।२०) इति सूत्रं त्वनुवादकत्वान्न पञ्चीकरणं न्यायसिद्धं बाधितुमुत्सहते। मेलनप्रतीतिश्च शरीरादौ पञ्चानामविशिष्टैव, पञ्चीकृतपञ्चमहाभूतानीति च भाष्यकारवचनम्। तस्मादलमनेनानात्मचिन्तनेनेति दिक्।

तत्र शङ्कते—**अत्र त्रिवृतमिति**। एकैकां पृथिव्यादिव्यक्तिं त्रिवृतं पृथिव्यप्तेजोभागसंयुक्तां करोमीत्यर्थः। **श्रुतेः**, छान्दोग्यश्रुतेः। **'त्रिवृत्कुर्वत उपदेशात्'** इति सूत्रात्, 'संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्' इति सूत्रैकदेशार्थादित्यर्थः। इदमधिकरणं द्वितीयाध्यायस्य चतुर्थपादे। सत्प्रक्रियां तेजोबन्नानां सृष्टिं विधायोपदिश्यते, 'सेयं दैवतेक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति। तत्र संशयः—किं जीवकर्तृकमिदं नामरूपमाहोस्वित्परमेश्वरकर्तृकमिति। तत्र प्राप्तं तावत् जीवकर्तृकमेवेदं नामरूपव्याकरणमिति। कुतः? 'अनेन जीवेनात्मना' इति विशेषणात्। यथा लोके चारेणाहं परसैन्यमनुप्रविश्य संकलयामि इत्येवंजातीयके प्रयोगे चारकर्तृकमेव तत्सैन्यसंकलनं हेतुकर्तृत्वात् देवतावद्राजात्मन्यध्यारोपयति, संकलयामि इत्युत्तमपुरुषप्रयोगेण, एवं जीवकर्तृकमेव सन्नामरूपव्याकरणं, हेतुकर्तृत्वात् देवतात्मन्यध्यारोपयति व्याकरवाणीत्युत्तमपुरुषप्रयोगेण। अपि च डित्थकपित्थादिषु नामसु घटकपाटादिषु[1] च रूपेषु जीवस्यैव व्याकर्तृत्वं दृष्टं, तस्माज्जीवकर्तृकमेवेदं व्याकरणं इत्येवं प्राप्तेऽभिधत्ते—संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत इति। तुशब्देन पक्षं व्यावर्तयति। संज्ञामूर्तिक्लृप्तिरिति नामरूपव्याक्रिया इत्येतत्। त्रिवृत्कुर्वत इति परमेश्वरं लक्षयति त्रिवृत्करणे तस्य निरपवादात्कर्तृत्वनिर्देशात्। येयं संज्ञामूर्तिक्लृप्तिश्चाग्निरादित्यश्चन्द्रमाविद्युदिति तथा कुशकाशपलाशादिषु पशुमृगमनुष्यादिषु च प्रत्याकृति प्रतिव्यक्ति चानेकप्रकारा[2]। सा खलु परमेश्वरस्यैव तेजोबन्नानां निर्मातुः क्लृप्तिर्[3]भवितुमर्हति, कुतः? उपदेशात्। तथा हि सेयं देवतैक्षत इत्युपक्रम्य व्याकरवाणीत्युत्तमपुरुषप्रयोगेण परस्यैव ब्रह्मणो व्याकर्तृत्वमिहोपदिश्यत इति वियदधिकरणार्थमाह—**तथा हीति**। 'सदेव सौम्येदमग्र आसीत् एकमेवाद्वितीयम्। तदैक्षत बहुस्यां प्रजायेयेति। तत्तेजोऽसृजत। तत्तेज ऐक्षत बहुस्यां प्रजायेयेति। तदपोऽसृजत' इत्यनेन, तदनन्तरं 'ता आप ऐक्षन्त बह्वयः स्याम प्रजायेमहीति। ता अन्नमसृजन्त' इत्यनेन च छान्दोग्ये त्रयाणां

---

१. खगयोर्घटशकटादिष्विति।

२. क१पुस्तके पशुमृगमनुष्यादिषु च प्राप्ता क्लृप्तिः प्रत्याकृति प्रतिव्यक्ति चानेकप्रकारा इति।

३. कृतिरिति गपुस्तके।

सृष्टिश्रवणेऽपि द्वयोरुपसंहारः। अस्यां प्रतिज्ञायां हेतुमाह—**'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद्वायुः' इत्यादिश्रुतेरिति**। त्रयाणां पृथिव्यप्तेजसां द्वयोर्वाय्वाकाशयोर्यद्युपसंहारेणापाततः छान्दोग्यश्रुतिविरोधपरिहारस्तथापि छान्दोग्ये तेजसः प्राथम्यभङ्गस्तथा च कथमुपसंहारस्तत्राह—**तेजसः प्राथम्येति**। तेजोनिष्ठं यत्प्राप्तं पाठक्रमेण प्राथम्यं तस्य तेजोरूपस्य तेजःपदार्थस्य धर्मत्वात् तदपेक्षया वाय्वाकाशयोः प्राबल्यं वाय्वाकाशपदार्थत्वादित्यर्थः। दृष्टं च पूर्वमीमांसायां पदार्थधर्मापेक्षया पदार्थस्य बलवत्त्वम्। वाय्वाकाशयोरुभयोरावश्यकोपसंहारे छान्दोग्यश्रुतिसम्मतिमाह—**छान्दोग्ये चेति**। 'येनाश्रुतं श्रुतं भवति अमतं मतं अविज्ञातं विज्ञातम्' इत्यादि प्रतिज्ञा हीयेत वाय्वाकाशयोर्ब्रह्मकार्यत्वाभावेन ब्रह्मज्ञानेन तयोर्ज्ञानं न स्यात्, नह्यकारणस्य कनकधौतस्य[1] ज्ञानादेतदकार्यस्य कनकवलयस्य ज्ञानमिति कश्चित्प्रेक्षावानङ्गीकरोति इति दृष्टम्। कथं तर्हि त्रिवृतं त्रिवृतं करवाणीत्युक्तिस्तत्राह—**तत्रेति। अवयुत्यानुवादेनेति**। सम्भवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यते इति न्यायमनुसृत्याह—**त्रिवृतमिति**। सृष्टिप्रतिपादकछान्दोग्यबृहदारण्यकादिश्रुतिजाते वाक्यभेदप्रसङ्गो दोष इत्यर्थः। इदं च स्पष्टमाकरे। एवमपि भगवद्बादरायणमेवास्तु त्रिवृत्करणे प्रमाणमत आह—**त्रिवृत्कुर्वत इति**। अत्र च त्रिवृत्कुर्वत इत्यंशेन त्रिवृत्कुर्वतः सतः परमेश्वरस्य नामसृष्टिरुक्ता[2] न तु त्रिवृत्करणम्। तथा च त्रिवृत्करणांशे तस्य तात्पर्याभावात् न तत्र प्रमाणमित्यर्थः। **मेलनेति**। अत्र च प्रमाणं 'पञ्चभूतात्मके देहे पञ्चसु प्रलयं गते' इत्याद्याः स्मृतयः। पञ्चीकरणे भगवत्पादवचनमपि प्रमाणमित्याह—**पञ्चीकृतेति**। पञ्चीकरणमुपसंहरति—**तस्मादिति**।

**तानि च पञ्चीकृतानि पञ्चमहाभूतानि मूर्ताख्यानि मिलित्वा एकं कार्यमिन्द्रियाणामधिष्ठानं भोगायतनमुत्पादयन्ति। तदेव शरीरमित्युच्यते। तत्र सत्त्वप्रधानं देवशरीरं, रजःप्रधानं मनुष्यशरीरं, तमःप्रधानं तिर्यगादिस्थावरान्तं शरीरम्। तस्य च शरीरस्य पाञ्चभौतिकस्यापि चित्ररूपस्येव क्वचिन्न्यूनाधिकभावो भूतानां न विरुध्यते। एवं विषया अपि पञ्चीकृतैकैकभूतजन्याश्चतुर्दशभुवनाख्या ऊर्ध्वमध्याधोभावेन सत्त्वरजस्तमोंशप्रधानाः[3] घटादयश्च। एतत्सर्वं ब्रह्माण्डाख्यं विराडिति मूर्तमिति चोच्यते।**

---

१. क१खयोर्कलधौतस्येति।

२. खगपुस्तकयोर्परमेश्वरस्यनामरूपसृष्टिरुक्ता इति।

३. कपुस्तके प्रधानाश्च घटादयश्चेति।

'तानि च तथाभूतानि भोगायतनं शरीरं भोग्यं च विषयमन्तरेण' इत्यादिना यच्छरीरमुक्तं तदिदानीं कथयति—**तानि चेति**। इन्द्रियं विना न भोगः सम्भवतीत्यत उक्तं—**इन्द्रियाणामधिष्ठानमित्यादि**। तत्रापि देवादिशरीरविभागानाह—**तत्रेति**। पाञ्चभौतिकत्वे समाने कस्यचित्पृथिवीभागाधिक्यं कस्यचिज्जलभागाधिक्यं कस्यचित्तेजोभागाधिक्यमित्यादिभेदः कथं तत्राह—**तस्य चेति**। शरीरमुक्त्वा विषयानाह—**एवं विषया अपीति**। चतुर्दश भुवनानि—भूः, भुवः, स्वः, महः, जनः, तपः, सत्याख्यानि सप्त उपरि; अतल, वितल, सुतल, रसातल, तलातल, महातल, पातालाख्यानि सप्ताधोधः। सत्त्वरजस्तमोंशप्रधाना इत्यस्य पूर्वेणान्वयः।

**अयमौपनिषदः सृष्टिक्रमः। तद्विपरीतो लयक्रमः। पञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं विराडाख्यं मूर्तं पृथिव्याद्येकैकभूतलयेनामूर्तेऽपञ्चीकृतपञ्चमहाभूतात्मके हिरण्यगर्भाख्ये स्वकारणे लीयते। स एव दैनन्दिनः प्रलयः। अमूर्तं चाव्याकृते परमेश्वरोपाधौ। अव्याकृतस्य त्वनादित्वेन कारणाभावान्न लयः, स्वकारणे सूक्ष्मरूपेणावस्थानं लय इति तल्लक्षणात्। अयमेव प्राकृतः प्रलयः। ब्रह्मज्ञानादात्यन्तिक उच्छेदस्तु आत्यन्तिकः प्रलयः। स च कारणक्रमेणैव, कारणोच्छेदादेव कार्योच्छेदात्। सर्वं च सृष्टिप्रलयादिकं स्वप्नसृष्टिप्रलयवदपारमार्थिकमपि वासनादार्ढ्यात् व्यवहारक्षममिति न मायिकत्वेऽपि तुच्छत्वप्रसङ्गः। यथा चैतत्तथा व्यक्तमाकरे।**

ननु घटादयश्चेत्यत्र, ननु पुराणादौ महदादिक्रमेणापि सृष्टिः श्रूयतेऽत आह—**अयमौपनिषदः सृष्टिक्रम इति**। भवत्वेवं सृष्टिक्रमो लयक्रमस्तु कीदृश इत्यत आह—**एतद्विपरीत इति**। स्वस्वकारणे लयात्तत्कार्यस्य सूक्ष्मरूपेणावस्थानमेव वैपरीत्यं तदेवाह—**पञ्चीकृतेति**। तत्रापि क्रममाह—**पृथिव्यादीति**। प्रलयो हि त्रिविधः श्रूयते तत्रायं कतमस्तत्राह[1]—**स एवेति**। अयं यः क्रम उक्तः स एवेत्यर्थः। भवत्वेवममूर्ते मूर्तस्य लयः, अमूर्तं तु कुत्र प्रलीयते तत्राह—**अमूर्तं चेति**। पूर्वोक्तपरमेश्वरस्योपाधौ अव्याकृत इत्यन्वयः। एवमव्याकृतस्य क लय इत्याह—**अव्याकृतस्य त्विति**। तृतीयो लयः कतमः कुतो वा तत्राह—**ब्रह्मज्ञानादिति**। ब्रह्मज्ञानाद्योऽत्यन्तोच्छेदः स कार्याविद्यायाः, स आत्यन्तिको लयो महाप्रलय इत्यर्थः। तत्रापि क्रममाह—**स चेति**। एवकारार्थस्तु कारणोच्छेदं विना न कार्यात्यन्तोच्छेद[2] इति द्योतयितुम्। ननु, सृष्ट्यादेर्मायिकत्वेनापारमार्थिकत्वं वदता भवता

१. क१पुस्तके कतमः स कुत्रेत्यत्राहेति।
२. गपुस्तके कारणोच्छेदेन कार्यस्यात्यन्तोच्छेद इति।

किं तुच्छत्वमङ्गीकृतं, तत्र न इत्याह—**सर्वं चेति**। अत्र हेतुमाह—**व्यवहारक्षममिति**। एवं च नेदं तुच्छं व्यवहारसमर्थत्वात्, यत्तुच्छं तन्न व्यवहारसमर्थं यथा गगनकमलादीति[1] व्यतिरेके दृष्टान्तः। किमिदं भवतैवोच्यते कश्चित्केनचित्प्रतिपादितं वा तत्राह—**यथा चेति**। न केवलं यथाकथंचित्प्रतिपादितमपि तु भाष्यादौ प्रकटं प्रतिपादितमिति व्यक्तपदार्थः[2]।

**एवं स्थिते जागरणादिव्यवस्थोच्यते। इन्द्रियवृत्तिकालीनार्थोपलम्भो जागरणम्। तत्र च मूर्तं विराडाख्यं भोग्यं प्रत्यक्षादिप्रमाणषट्केन व्यवह्रियमाणत्वात् व्यावहारिकं विश्वाख्येन जीवेनोपभुज्यते। स च देहेन्द्रियादिषु[3] प्रवेशात् व्यापनाद्वा विश्व इत्युच्यते, विश प्रवेशने विष्लृ व्याप्तौ[4]विति च स्मरणात्। अत्र यद्यपि विश्वेनामूर्तमव्याकृतं चानुमानादिनानुभूयते, तथापि व्यावहारिकं सर्वं विश्वेनैव ज्ञायत इति नियमात् स्थूलशरीरोपाध्यभिमानित्वाच्च न तस्य अवस्थान्तरव्यापकत्वम्। शुक्तिरजतादिज्ञानानामप्रामाणिकत्वात्तद्विषयस्याव्यावहारिकत्वेऽपि इन्द्रियव्यापारकालीनत्वाज्जागरणोपपत्तिः। ज्ञानोत्पत्त्यादिप्रक्रिया चाधस्तादुक्तैव।**

**एवं स्थित इति**। एवमुक्तक्रमेण प्रपञ्चस्य तुच्छविलक्षणत्वे स्थित इत्यर्थः। अन्यथा प्रपञ्चस्य तुच्छत्वे जाग्रत्स्वप्नादिविभागो न स्यादिति हृदयम् (?हार्दम्)। **इन्द्रियेति**। इन्द्रियद्वारा निःसृतान्तःकरणमेव वृत्तिस्तत्कालीनार्थोपलम्भो जागरणमित्यर्थः। इन्द्रियद्वारा निःसृतान्तःकरणस्य वृत्तेर्भावान्निःसृतान्तःकरणमेव वृत्तिरिति व्याततम्। अत्र[5] **जागरणमिति** लक्ष्यवाचकं पदम्[6]। परिशिष्टं तु लक्षणम्। स्वप्नसुषुप्त्यादौ घटसुखाद्युपलम्भसत्त्वात्तत्रातिव्याप्तिवारणाय **वृत्तिरिति**। नन्वेतावता प्रबन्धेन भोग्यवर्ग एवोक्तो न तु भोक्तेत्याह—**तत्र चेति**। औपनिषदेऽतिप्रसङ्गात्प्रमाणानि प्रतिपादयति—**प्रत्यक्षादीति**। कियन्तीत्यपेक्षायामाह—**षट्केनेति**। षट् च, प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्ध्याख्यानीति। **स चेति**। विश्वाख्य-

---

१. खपुस्तके कमलादीति।

२. खपुस्तके इति व्यक्तं पदं, गपुस्तके च इत्यर्थकं व्यक्तं पदमिति।

३. कपुस्तके सर्वदेहेन्द्रियादिषु इति पाठः स न युक्तः।

४. तस्मिन्नेव विष व्याप्ताविति।

५. खपुस्तके इन्द्रियद्वारा इत्यारभ्य वृत्तिरिति इतिपर्यन्तं वाक्यचतुष्टयं नास्त्येव, गपुस्तके प्रथममात्रं नास्ति, क$_1$पुस्तके च तत्रातिव्याप्तिवारणाय इत्यनन्तरं इन्द्रियवृत्तिकालीनेति स्वप्नेऽतिव्याप्तिवारणाय वृत्तिरिति इति पाठः।

६. क$_1$पुस्तके लक्ष्यवाच्यं पदमिति।

जीव इत्यर्थः। उभयत्रैव हेतुमाह—**विश्व प्रवेशन इति**। ननु, मूर्तवत्सूक्ष्मपञ्च-भूततत्कार्यात्मकममूर्तमव्याकृतमपि च विश्वज्ञेयम्। तथा च कथमुक्तं स्थूलं पञ्चभूत-तत्कार्यं मूर्तं विराडाख्यं विश्वज्ञेयमित्याशङ्कते—**अत्र यद्यपीत्यादिना**। परिह-रति—**तथापीत्यादिना**। विश्वज्ञेयत्वमित्यत्र तात्पर्यात् व्यावहारिकत्वावच्छेदेन व्यावहारिकमात्रं विश्वस्य ज्ञेयं न तैजसादि(? देः)। इदं तु 'विश्वेनैव' इत्येवकारल-भ्यम्। प्रसङ्गादवस्थान्तरसम्बन्धित्वाभावं विश्वस्य साधयति—**स्थूलेति**। ननु, इन्द्रियवृत्तिघटितं चेज्जागरणलक्षणं तदा यस्मिन्पक्षे इदन्त्वमपि प्रातीतिकं तदा इद-न्त्वांशे रजतांशे च इन्द्रियवृत्त्यभावात् प्रातीतिकभानकाले इन्द्रियवृत्तिकालीनार्थोप-लम्भ इति जागरणलक्षणमव्याप्तमित्याशङ्क्य परिहरति—**शुक्तिरजतादिज्ञानाना-मित्यादिना**। **तद्विषयस्येति**। रजतादिज्ञानविषयस्य रजतादेरित्यर्थः। **इन्द्रि-येति**। एवं च इन्द्रियवृत्तिकालीनार्थोपलम्भ इति लक्षणं न कर्तव्यमपि तु इन्द्रि-यव्यापारकालीनार्थोपलम्भ इति। तथा च नाव्याप्तिरिति भावः।

**एवं जाग्रद्भोगजनककर्मक्षये स्वप्नभोगजनककर्मोदये च सति निद्राख्यया तामस्या वृत्त्या स्थूलदेहाभिमाने दूरीकृते सर्वेन्द्रियेषु देव-तानुग्रहाभावान्निर्व्यापारतया लीनेषु विश्वोऽपि लीन इत्युच्यते। तदा च स्वप्नावस्था। तत्रान्तःकरणवासनानिमित्तइन्द्रियवृत्त्यभावका-लीनोऽर्थोपलम्भः स्वप्नः। तत्र च मन एव गजतुरगाद्यर्थाकारेण विव-र्तते अविद्यावृत्त्या च ज्ञायत इति केचित्। अविद्यैव शुक्तिरजतादि-वत् स्वप्नार्थाकारेण परिणमते ज्ञायते चाविद्यावृत्त्येत्यन्ये। कः पक्षः श्रेयान्? उत्तरः। अविद्याया एव सर्वत्रार्थाध्यासाज्ञानाध्यासोपा-दानत्वेन कल्पितत्वान्मनोगतवासनानिमित्तत्वे च क्वचिन्मनःपरि-णामत्वव्यपदेशात्। ननु, तदा मनसो दृश्याकारपरिणामानभ्यु-पगमे द्रष्टृत्वसम्भवेनात्मनः स्वयंज्योतिष्ट्वासिद्धिरिति चेत्, न, बहिरिन्द्रियजन्यवृत्त्यभावेन तदानीं मनसोऽग्राहकत्वात् तत्सहका-रेणैव तस्य ग्राहकत्वनियमात्, सवृत्तिकान्तःकरणावच्छिन्नस्यैव चैतन्यस्य प्रमातृत्वनियमात् तदान्तःकरणसत्त्वेऽपि प्रमात्रभावः।**

आदिपदग्राह्यां स्वप्नावस्थां निरूपयितुमारभते—**एवमिति**। जाग्रद्भोगजनके कर्मणि क्षीण इत्यर्थः। **सर्वेन्द्रियेष्विति**। लीनेष्वित्यनेनान्वयः। **तत्रेति**। लक्षणा-दिभिर्निरूपणीय इत्यर्थः। जाग्रदतिव्याप्तिवारणायाह—**इन्द्रियवृत्त्यभावकालीन**

1. खपुस्तके क्षुप्तत्वादिति।

**इति** । सुखाद्युपलम्भकालीनसुषुप्तावतिव्याप्तिवारणायाह—**तत्रान्तःकरणेत्यादि** । ननु, स्वप्नस्य किमुपादानमतस्तदेव मतभेदेनाह—**तत्र चेति** । स्वप्न इत्यर्थः । प्रश्नोत्तरमाह—**उत्तर इति** । उत्तरः पक्षः श्रेयानित्यर्थः । हेतुमाह—**अविद्याया इति** । तर्हि शास्त्रे स्वप्नस्य मनःपरिणामत्वव्यपदेशः कथं तत्राह—**मनोगतेति** । स्वप्ने मनसः परिणामानभ्युपगमे बाधकमाशङ्कते—**नन्विति** । ननु, परेषामिव नास्माकं मनः स्वतन्त्रमिन्द्रियं किन्तु ज्ञानकर्मेन्द्रियसहकारि[1] । तथा च ज्ञानेन्द्रियव्यापाराभावे कथमापद्यते मनसो ग्राहकत्वमित्याह—**न, बहिरिति** । तर्हि तदानीं मनसः कथं प्रमातृत्वं न इत्याह—**सवृत्तिकेति** । एवं च वृत्त्यभावात्तदानीं मनसो न प्रमातृत्वमित्यर्थः । एवं च स्वाप्नप्रपञ्चो न प्रमातृभास्यः, अपि तु अविद्यावृत्तिसहकारेण साक्षिभास्य इत्यवधेयम् ।

**किमधिष्ठानं स्वप्नाध्यासस्य मनोवच्छिन्नं जीवचैतन्यमित्येके, मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यमित्यपरे । किं श्रेयः ? मतभेदेनोभयमपि । तथा हि—जाग्रद्बोधेन स्वप्नभ्रमनिवृत्त्यभ्युपगमादधिष्ठानज्ञानादेव च भ्रमनिवृत्तेः, ब्रह्मचैतन्यस्य चाधिष्ठानत्वे संसारदशायां तज्ज्ञानत्वाभावात् ज्ञानेन च सर्वद्वैतनिवृत्तेः न जाग्रद्बोधात्स्वप्ननिवृत्तिः स्यात् । 'स हि कर्ता' (बृ. आ. ४।३।१०) इति च जीवकर्तृत्वश्रुतेः आकाशादिप्रपञ्चवत् सर्वसाधारण्यापत्तेश्च न मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यमधिष्ठानम् ।**

उपादानं निरूप्याधिष्ठानं निरूपयति—**किमधिष्ठानमिति । मनोवच्छिन्नं जीवचैतन्यमिति** । अज्ञानावच्छिन्नं चैतन्यं जीव इति बोध्यम् । **किं श्रेय** इति प्रश्नस्योत्तरमाह—**मतभेदेनेति** । अधिष्ठानज्ञानाद्भ्रमनिवृत्तिरित्येकं[2] मतं, अधिष्ठानज्ञानाद्भ्रमतिरोभाव इत्यपरम् । तत्राद्ये पक्षे मनोवच्छिन्नं जीवचैतन्यमधिष्ठानमन्त्ये च मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यमिति । इदानीं जीवचैतन्यस्याधिष्ठानत्वं साधयितुं ब्रह्मचैतन्यस्याधिष्ठानत्वं दूषयति—**तथा हीति** । किं तेन तत्राह—**अधिष्ठानज्ञानादिति** । ततोऽपि किं तत्राह—**ब्रह्मचैतन्यस्येति । ज्ञानेन चेति** । तथा च ज्ञानाज्ञानाभ्यां नाधिष्ठानत्वमिति मन्तव्यम् । ब्रह्माधिष्ठानत्वसाधकं दूषयित्वा जीवाधिष्ठानत्वसाधकमाह—**स हीति** । 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः' इत्युक्त्वा तदनन्तरं 'न तत्र रथा न रथयोगा न पन्थानः' इत्युक्त्वा 'स हि' इत्युक्तम् जीवप्रकरणे

१. गपुस्तके ज्ञानकर्मोभयेन्द्रियसहकारीति ।
२. क१पुस्तके अधिष्ठानभ्रमस्य ज्ञानादिति पाठः स न समीचीनः ।

बृहदारण्यके। अतो जीवकर्तृकमित्यर्थः। पुनरपि ब्रह्माधिष्ठानत्वसम्पादकं दूषणमाह—**आकाशादीति**। आकाशादिप्रपञ्चस्य यथा सर्वजनव्यवहारविषयत्वं तथा स्वप्नप्रपञ्चस्यापि सर्वजनव्यवहारविषयत्वं स्यादित्यर्थः। एवं च पूर्वग्रन्थेन जीवचैतन्यस्याधिष्ठानत्वमुक्तं वेदितव्यम्।

**ननु, जीवचैतन्यस्यानावृतत्वेन सर्वदाभासमानत्वात्कथमधिष्ठानत्वम्? सत्यं, तत्रापि स्वप्नाध्यासानुकूलव्यावहारिकसंघातभानविरोध्यवस्थाज्ञानाभ्युपगमात्, स्वप्नदशायां चाहं मनुष्य इत्यादिप्रातीतिकसंघातान्तरभानाभ्युपगमात्[1] शय्यां स्वपिमीति शय्यान्तरवत्। भानसामग्र्यभावश्च तुल्य एव।**

ब्रह्मचैतन्ये बाधकमिव जीवचैतन्येऽपि बाधकमविकलमिति शङ्कते—**नन्विति**। ननु, तर्हि विरोधिन्यवस्थाज्ञाने जागरूके कथं व्यावहारिकमनुष्यादिसंघातभानं तत्राह—**स्वप्नदशायामिति**। व्यावहारिकसंघातभानसामग्र्यां[2] विद्यमानायां कथं व्यावहारिकसंघातभानाभावः, अत आह—**शय्यायां स्वपिमीति**। शय्यायां स्वपिमीत्यत्र बोधे यथा व्यावहारिकशय्या न भासते किन्तु प्रातीतिकशय्या तथाऽहं मनुष्य इत्यादिबोधेऽपि प्रातीतिको मनुष्यो भासते न व्यावहारिकः, तथा च क्व व्यावहारिकभानसामग्री, सामग्र्याः फलनियतत्वादित्यर्थः। **शय्यान्तरवत्**, शय्यान्तरभानवत्।

**ननु, अहं मनुष्य इत्यादिव्यावहारिकसंघातज्ञानस्य प्रमाणाजन्यत्वात्कथमज्ञाननिवर्तकता। अवस्थान्तरान्यथानुपपत्त्या तत्कल्पने सुषुप्तावपि स्वप्नबाधकज्ञानमास्थीयेत[3], तच्चानिष्टं जाग्रत्त्वापत्तेरिति चेत्, साध्ववोचः[4], स्वप्नावस्थाज्ञानस्यैवान्तःकरणलयसहितस्य सुषुप्तिरूपत्वान्न तत्र तद्बाधः[5]। जागरणे तु मिथ्यैव स्वप्नोऽभादित्यनुभवादहमितिज्ञानस्य प्रमाणाजन्यत्वेऽपि[6] यथार्थत्वात् शरीरादिज्ञानस्य च प्रमाणजन्यत्वादवस्थाज्ञानविरोधित्वमनुभवसिद्धम्। विशेषाज्ञानं तु न प्रमाणजन्यवृत्तिमन्तरेण निवर्तते। साक्षिण-**

१. कपुस्तके संघान्तराभानाभ्युपगमादिति।
२. खपुस्तके अव्यावहारिकसंघातभानसामग्र्यामिति, गपुस्तके च अथ व्यावहारिकेत्यादि।
३. कपुस्तके स्वप्नबोधकज्ञानमास्थीयत इति।
४. नासौ विरोध इति तस्मिन्नेव, खपुस्तके च साध्ववोचः, नासौ विरोध इति।
५. कपुस्तके तद्बोध इति।
६. खगयोर्ज्ञानस्याप्रमाणजन्यत्वेऽपीति।

**श्चाविद्यानिर्वतकत्वाभावोऽविद्यासाधकत्वेनैव धर्मिग्राहकमानसिद्ध इति न किञ्चिद्वद्यम्। यावन्ति ज्ञानानि तावन्त्यज्ञानानीति चाभ्युपगमात् शुक्तिज्ञानेनेव व्यावहारिकसंघातज्ञानेनाज्ञाननिवृत्तावपि पुनरपि कदाचिद्रजतभ्रमवन्न स्वप्नाध्यासानुपपत्तिरिति जीवचैतन्यमेवाधिष्ठानमिति पक्षे न कोऽपि दोषः।**

अथ जीवचैतन्यस्याधिष्ठानत्वपक्षेऽहं मनुष्य इत्यादिस्वप्नाव्यवहितोत्तरज्ञानस्य न स्वप्नकारणीभूतावस्थाज्ञाननिवर्तकत्वं चक्षुरादीन्द्रियपञ्चकजन्यवृत्तिरूपकारणाभावादित्याशङ्कते[1]—**नन्विति**। आशङ्क्य परिहरति—**अवस्थान्तरेति**। **तत्कल्पने,** प्रमाणाजन्यज्ञानस्यापि[2] बाधकत्वकल्पने। **सुषुप्तावपीति**। यदा स्वप्नोत्तरं सुषुप्तिस्तस्यामित्यर्थः। ननु, भवतु नाम बाधकज्ञानं किं तेन तत्राह—**तच्चेति**। प्रमाणाजन्यज्ञानस्य नाज्ञाननिवर्तकत्व यदुक्तं तत्समीचीनमित्याह—**साध्ववोच इति**। स्वप्नज्ञानानिवृत्तौ कथं सुषुप्तिस्तत्राह—**स्वप्नावस्थेति**। **न तत्रेति**। तस्यां सुषुप्तौ न स्वप्नाज्ञानबाध इत्यर्थः। **अहमितिज्ञानस्येति**। एवं च न प्रमाणजन्यज्ञानत्वेनाज्ञाननिवर्तकत्वमपि तु यथार्थज्ञानत्वेनेति भावः। यदि वदसि विशेषाज्ञानं शुक्त्याद्यज्ञानं न प्रमाणजन्यज्ञानमन्तरेण निवर्तते तथापि न नः क्षतिः[3]। अहमिति साक्षिज्ञानस्य प्रमाणाजन्यत्वेऽपि प्रमाणजन्यशरीरादिज्ञानस्य सत्वादित्याह—**शरीरादिज्ञानस्य चेति**। अहमिति साक्षिज्ञानस्य यथार्थत्वेऽपि नाज्ञाननिवर्तकत्वमित्याह—**साक्षिणश्चेति**। ननु, व्यावहारिकपदार्थज्ञानेन स्वप्नाज्ञाननिवृत्तौ कथं पुनः स्वप्नस्तत्राह—**यावन्तीति**। **शुक्तिज्ञानेनै(?ने)वेति**। यथैकेन शुक्तिज्ञानेनैकस्मिन्नज्ञाने नाशितेऽन्यावस्थाऽज्ञानाद्रजतादिभ्रमोत्पत्तिस्तथापि (?तथैव) एकस्मिन्स्वप्नाज्ञाने नाशिते अन्यस्मादज्ञानात्स्वप्नोत्पत्तिरित्यर्थः। जीवचैतन्यस्याधिष्ठानपक्षमुपसंहरति—**जीवचैतन्यमिति**।

**यदा पुनर्ब्रह्मज्ञानादेवाज्ञाननिवृत्त्यभ्युपगमस्तदा रज्ज्वां दण्डभ्रमेण सर्पभ्रमतिरोधानवदधिष्ठानज्ञानाभावेऽपि जाग्रद्भ्रमेण स्वप्नभ्रमतिरोभावोपपत्तेः ब्रह्मचैतन्यमेव स्वप्नाध्यासाधिष्ठानमिति पक्षेऽपि न कश्चिद्दोषः। प्रतिजीवं स्वप्नाध्यासासाधारण्यं तु मनोगतवासनानामसाधारण्यादेव।**

---

१. गपुस्तके इन्द्रियपञ्चकजन्यत्वात् इत्याशङ्कत इति।

२. तस्मिन्नेव प्रमाणजन्यज्ञानस्यापीति।

३. क१पुस्तके तथापि न क्षतिरिति।

जीवचैतन्यस्याधिष्ठानपक्षमुपपाद्य मूलाज्ञानावच्छिन्नसाक्षिचैतन्यस्याधिष्ठानपक्षमुपपादयन्पूर्वोक्तदोषं परिहरति—**यदा पुनरिति**। ननु, ब्रह्माधिष्ठानकजाग्रत्प्रपञ्चस्य सर्वपुरुषसाधारण्यमिव ब्रह्माधिष्ठानकस्वप्नस्यापि सकलपुरुषसाधारण्यं स्यात्। न च कल्पकजीवस्यैव तत्प्रत्यक्षं नाकल्पकस्येति वाच्यं, मनोभेदेनैव जीवभेदात्तत्राह—**प्रतिजीवमिति**। तथा च जीवस्यावच्छेदकस्य मनसो वासनानिमित्तको यः स्वप्नः स तस्य प्रत्यक्ष इति भावः।

**मनोवच्छिन्नं ब्रह्मचैतन्यमेवाधिष्ठानमेतस्मिन्नपि पक्षेऽवस्थाज्ञानस्यावरकत्वाङ्गीकारान्न काप्यनुपपत्तिः। अत एव शास्त्रेषु क्वचित्क्वचित्तथा व्यपदेशः। ननु, मनोवच्छिन्नचैतन्यस्याधिष्ठानत्वे अहं गज इत्याहङ्कारसामानाधिकरण्येन गजप्रतीतिः[2] स्यात् इदं रजतमिति शुक्तिसामानाधिकरण्येन रजतप्रतीतिवत् नत्वयं गज इति। ब्रह्मचैतन्यस्याधिष्ठानत्वपक्षेऽपि गज इत्याकारैव प्रतीतिः स्यान्न त्वयं गज इति तत्रापीदङ्कारास्पदीभूतबाह्यार्थाभावस्य समानत्वादिति चेत्, न, आद्ये पक्षे अहङ्कारस्य शुक्तिवदधिष्ठानानवच्छेदकत्वात् शुक्ती रजतमितिवदहं गज इति न भ्रमाकारप्रसङ्गः। अहमिति ज्ञानस्येयं शुक्तिरिति ज्ञानस्येव भ्रमविरोधित्वात्, इदमंशस्य च भ्रमाविरोधिन एव तत्र भानाभ्युपगमात्। अन्त्ये तु गज इत्याकारवदयमित्याकारोऽपि कल्पित एव। उभयाकारबाधेऽप्यधिष्ठानभूतचैतन्याबाधान्न शून्यवादप्रसङ्गः। जाग्रद्दशायामपि शुक्तीदङ्कारविलक्षणस्य प्रातीतिकस्यैव रजतेदङ्कारस्य भानाभ्युपगमाच्च। 'अध्यस्तमेव हि परिस्फुरति भ्रमेषु' (सं० शा० १-३६) इति न्यायात्। शुक्तीदमंशभानपक्षेऽपि न इदमंशसत्यत्वमध्यासे प्रयोजकम्, किन्त्वधिष्ठानसत्यत्वम्। अधिष्ठानं च तत्राज्ञातशुक्तिचैतन्यमिवात्रापि[3] साक्षिचैतन्यं विद्यत एवेत्युपपादितम्। तस्मान्न पक्षद्वयेऽपि काप्यनुपपत्तिः।**

यथा मनोवच्छिन्नं जीवचैतन्यमधिष्ठानमिति पक्षे न दोषस्तथा मनोवच्छिन्नं ब्रह्मचैतन्यमधिष्ठानमिति पक्षेऽपि न दोष इत्याह—**मनोवच्छिन्नमिति**। ब्रह्मचै-

१. गपुस्तके ब्रह्मचैतन्यस्याधिष्ठानपक्षमुपपादयन्निति।

२. कपुस्तके सामानाधिकरण्येनैव प्रतीतिः स्यादिति।

३. तस्मिन्नेवाधिष्ठानं च तत्राज्ञानं शुक्तिचैतन्यमिवेति पाठः स न समीचीनः।

तन्यस्य सर्वदा भासमानत्वेन कथमधिष्ठानत्वमज्ञानत्वाभावात्तत्राह—**एतस्मिन्नपि पक्ष इति**। मनोवच्छिन्नजीवचैतन्यस्याधिष्ठानत्वपक्षे यथावस्थाज्ञानस्यावरकत्वेन न दोषस्तथा ब्रह्मचैतन्यस्याधिष्ठानपक्षेऽप्यावरकत्वान्न दोष इत्यर्थः। मनोवच्छिन्नजीवचैतन्याधिष्ठानपक्षे, मूलाज्ञानावच्छिन्नब्रह्मचैतन्याधिष्ठानपक्षे[1], मनोवच्छिन्नब्रह्मचैतन्याधिष्ठानपक्षे[2] च प्राचीनसम्मतिमाह—**अत एवेति**। अधुना उक्तपक्षयो[3]राशङ्कते—**नन्विति**। **मनोवच्छिन्नेति**। मनोवच्छिन्नजीवचैतन्यस्येत्यर्थः। अधिष्ठानतावच्छेदकसामानाधिकरण्येनारोप्यमाणे[4] निदर्शनमाह—**इदमिति**। इदमंशावच्छिन्नचैतन्यस्याधिष्ठानत्वे यथेदं रजतमिति ज्ञानं तथाऽहमंशावच्छिन्नचैतन्यस्याधिष्ठानत्वेऽहं गज इति ज्ञानं स्यादित्यर्थः। सामानाधिकरण्येनैव इत्येवकारव्यावर्त्यमाह—**न त्वयं गज इतीति**। **ब्रह्मचैतन्यस्येति**। मूलाज्ञानावच्छिन्नब्रह्मचैतन्यस्य मनोवच्छिन्नब्रह्मचैतन्यस्य चेत्यर्थः। हेतुमाह—**तत्रापीति**। **नाद्य इति**। यथा रजताधिष्ठाने शुक्त्यवच्छिन्नचैतन्ये शुक्त्यज्ञानावच्छिन्नचैतन्ये वा शुक्तिरवच्छेदिका तथा स्वप्नगजाधिष्ठानेऽहङ्कारावच्छिन्नचैतन्येऽहङ्कारोऽवच्छेदकस्तथा च यथा शुक्तौ रजतमिति ज्ञानं न भवति तथाऽहं गज इति ज्ञानं न भवतीत्यर्थः। उक्तेऽर्थे हेतुमाह—**अहमिति ज्ञानस्येति**। तर्हि कथं तत्रेदमंशभानं तत्राह—**इदमंशस्य चेति**। कल्पितेदमंशस्य चेत्यर्थः। एवं च कल्पितेदमंशभानं न भ्रमविरोधि किन्तु शुक्त्यवच्छेदकेदमंशभानमित्यवधेयम्[5]। अथवा तत्रेदन्त्वेन रूपेणेदमंशभानं न तु शुक्तित्वादिरूपेणेति भावः। स्यादेतत्, तथापि स्वाप्नगजभ्रमेऽविद्यमान इदमाकारः कथं भासते तत्राह—**स्वप्ने (? अन्त्ये) त्विति**। तर्हि उभयाकारस्य कल्पितत्वेन बाधितत्वाच्छून्यवादिमतप्रवेशस्तत्राह—**उभयाकारेति**। तर्हि भ्रमस्य द्वैरूप्यं स्वप्नजाग्रद्भ्रमयोः कल्पिताकल्पितेदमंशभानात्तत्राह—**जाग्रद्दशायामपीति**। अत्र संक्षेपशारीरकोक्तं प्रमाणमाह—**अध्यस्तमेवेति**।

> अध्यस्तमेव हि परिस्फुरति भ्रमेषु, नान्यत्कथंचन परिस्फुरति भ्रमेषु।
> रज्जुत्वशुक्तिशकलत्वमरुक्षितित्वचन्द्रैकताप्रभृतिकानुपलम्भनेन (सं० शा० १—३६)

---

१. क₁पुस्तके साक्षिचैतन्याधिष्ठानपक्ष इति।

२. तस्मिन्नेव मनोवच्छिन्नसाक्षिचैतन्याधिष्ठानपक्ष इति।

३. गपुस्तके उक्तेषु त्रिष्वपि पक्षेष्विति पाठः स न समीचीन इति मन्ये यतोऽधस्तात्टीकाकार एव कथयति 'तस्मात्' इत्यस्य व्याख्याने ब्रह्मचैतन्याधिष्ठानपक्षे यद्यप्यवच्छेदकभेदेन द्वाववान्तरभेदौ भवतस्तथापि तत्रोभयोरेक एवावच्छेद्यवस्तुसत्त्वेन ग्रन्थकर्ताऽप्युभयोः पक्षयोरिति वदतीति।

४. क₁पुस्तके सामानाधिकरण्येनोभयभान इति।

५. खगयोः शुक्तिनिष्ठेदमंशभानमित्यवधेयमिति।

इत्यन्तः श्लोको बोध्यः। ननूक्तक्रमेण शून्यवादपरिहारेऽपि स्वप्नाध्यासो न समर्थितः, अध्यासप्रयोजकत्वे सत्येदमंशाभानादत आह—**शुक्तीदमंशेति**। मतत्रयमुपसंहरति—**तस्मादिति**। मूलाज्ञानावच्छिन्नब्रह्मचैतन्यमनोवच्छिन्नचैतन्ययोरवच्छेदकभेदेऽप्यवच्छेद्यभेदाभावादुभयोः पक्षयोरैक्यमभिसंधाय पक्षद्वयेऽपीत्युक्तमिति बोध्यम्।

**अत्र च स्वाप्निकपदार्थभोक्ता तैजस इत्युच्यते। पित्ताख्यतेजःप्रधानत्वादादित्यादिज्योतिरन्तरेणापि भासकत्वादिति वा।**

स्वप्नाधिष्ठानं निरूप्य स्वप्नभोक्तारमाह—**अत्रेति**। स्वाप्नभोक्तुस्तैजसत्वमुपपादयति—**पित्ताख्येनेति (?ख्येति)**। तेजःशब्दस्य पित्तपदप्रतिपाद्यत्वं याज्ञवल्क्यादौ[1] सुप्रसिद्धम्। इति स्वप्नावस्थानिरूपणम्।

**एवं जाग्रत्स्वप्नभोगद्वयेन श्रान्तस्य जीवस्य तदुभयकारणकर्मक्षये ज्ञानशक्त्यवच्छिन्नस्य सवासनस्यान्तःकरणस्य कारणात्मनावस्थाने सति विश्रामस्थानं सुषुप्त्यवस्था। न किञ्चिद्वेदिषमिति कारणमात्रोपलम्भः सुषुप्तिः। तत्र जाग्रत्स्वप्नभोग्यपदार्थज्ञानाभावेऽपि साक्ष्याकारं, सुखाकारं, अवस्थाऽज्ञानाकारं चाविद्यायाः वृत्तित्रयमभ्युपेयते। अहङ्काराभावाच्च नैका विशिष्टवृत्तिः सुषुप्त्यभावप्रसङ्गात्। अत एव वृत्तिरूपस्योपलम्भस्याभावान्न प्रलयेऽतिव्याप्तिः, तत्र तत्कल्पनाबीजाभावात्, इह च सुखमहमस्वाप्सं न किञ्चिद्वेदिषमिति सुप्तोत्थितस्य परामर्शात्, अननुभवे च परामर्शानुपपत्तेः। अन्तःकरणोपरागकालीनानुभवजन्यत्वाभावाच्च न तत्तोल्लेखाभावेऽपि स्मरणत्वानुपपत्तिः। स्मरणे तत्तोल्लेखनियमाभावाच्च जाग्रद्दशायामस्वाप्समित्यनुभवानुपपत्तेः लिङ्गाभावेन च आश्रयासिद्ध्यां[2] चानुमानस्यासंभवात्। अहङ्कारस्तु उत्थानसमय एवानुभूयते। सुषुप्तौ लीनत्वेन तस्याननुभूतत्वात् स्मरणानुपपत्तेः। मुखप्रतिबिम्बाश्रये दर्पणे जपाकुसुमलौहित्याध्यासे रक्तं मुखमिति प्रतीतिवदहङ्काराश्रयं[3] साक्षिचैतन्यस्य स्मरणाश्रयत्वात् अहमस्वाप्समिति सामानाधिकरण्यप्रतीतिः, न पुनरहं सुखीति वाश्रयतयां[4]। स्मृतिसंशयविपर्ययाणां**

---

१. या. स्मृ. ३-७७.

२. खपुस्तके लिङ्गाभावे चाश्रयासिद्ध्येति।

३. खगयोरहङ्काराश्रयतयेति।

४. खगपुस्तकयोर्नपुनरहं सुखीवदाश्रयतयेति।

साक्षिचैतन्याश्रयत्वनियमादहङ्कारस्य च प्रमाणजन्यज्ञानाश्रयत्वात् प्रमात्वेनैव तत्कार्यतावच्छेदात्, अप्रमात्वावच्छेदेन च अविद्याया एव कारणत्वात्। अत एव अनाप्तवाक्यादिजन्यपरोक्षविभ्रमोऽपि अविद्यावृत्तिरेवेत्यभ्युपगमो वेदान्तविदाम्। तत्रान्तःकरणवृत्तिजनकसामग्रीसम्भवेऽपि प्रमात्वाभावावरोधेनान्तःकरणस्यासामर्थ्यात्। नामादिषु ब्रह्माध्यासस्तु इच्छाधीनतया भ्रमप्रमाविलक्षणा मनोवृत्तिरेव कामादिवत्। तदुक्तं 'अत एव चोदनाजन्यत्वान्मानसी क्रियैव सा, न ज्ञानम्' इति। एतेन तर्कस्यापि मनोवृत्तित्वं व्याख्यातम्। व्याप्यारोपेण व्यापकप्रसञ्जनात्मकस्य तस्य इच्छाधीनतया भ्रमप्रमाविलक्षणत्वात्। अत एव मनननिदिध्यासनसहिते श्रवणाख्ये वेदान्तविचारे श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादिविधिरुपपद्यते, तस्य चतुर्विधान्वयव्यतिरेकादितर्करूपत्वात्। दृग्दृश्यान्वयव्यतिरेकः, साक्षिसाक्ष्यान्वयव्यतिरेकः, आगमापायितदवध्यन्वयव्यतिरेकः, दुःखिपरमप्रेमास्पदान्वयव्यतिरेक इति। अनुवृत्तव्यावृत्तान्वयव्यतिरेकः पञ्चमः। एतच्च सर्वेषां वेदान्तानुकूलतर्काणां चतुर्लक्षणीमीमांसाप्रतिपादितानामुपलक्षणमित्यभियुक्ताः। विस्तरस्तु वेदान्तकल्पलतिकायामनुसन्धेयः।

क्रमप्राप्तां सुषुप्त्यवस्थां निरूपयितुमुपक्रमते—**एवमिति**। **जीवस्येति**। विश्रामस्थानं सुषुप्त्यवस्था इत्यनेनान्वयः। **तदुभयेति**। तदुभयं, जाग्रत्स्वप्नोभयम्। जाग्रत्स्वप्नोभयकर्मक्षये कर्मणि लीने। अन्यथा पुनः स्वाप्नान्तरानुपपत्तिः। प्राणमनसोरैक्यमभिप्रेत्याह—**ज्ञानशक्त्यवच्छिन्नस्येति**। एवं च तदेवैकं वस्तु ज्ञानशक्त्यवच्छिन्नमन्तःकरणमुच्यते क्रियाशक्त्यवच्छिन्नं सत्प्राण इत्यवधेयम्। बुद्धेः कारणात्मनावस्थानं सुषुप्तिरिति प्राचीनलक्षणं प्रलयेऽतिव्याप्तमत उपलम्भघटितं सुषुप्तिलक्षणमाह—**कारणेति**। **उपलम्भः**, वृत्तिरूपं ज्ञानम्। ननु, सुषुप्तौ विषयान्तरस्यानुभवाभाव इव सुखस्यानुभवाभावात्कथं सुप्तोत्थितस्य सुखस्मरणमत आह—**तत्रेति**। ननु विशिष्टवृत्तिमुपेक्ष्य किमिति वृत्तित्रयमङ्गीक्रियते तत्राह—**अहङ्काराभावाचेति**। अहङ्काराभाव एव कुतस्तत्राह—**सुषुप्त्यभावेति**। सम्प्रदायमनुरुन्ध्य वृत्तित्रयमुक्तं वस्तुतस्तु एकैव वृत्तिः। इदं च प्रतिपादितं श्रीपादैरद्वैतसिद्धौ मयापि विस्तृतमद्वैतसिद्धिटीकायां सिद्धिसाधके। उपलम्भपदकृत्यमाह—

---

१. कपुस्तके प्रमात्वाभावापराधेनेति।

**वृत्तिरूपस्येति**। ननु, सुषुप्ताविव प्रलयेऽपि वृत्तिः कल्पनीया तत्राह—**तत्रेति**। प्रलय इत्यर्थः। सुषुप्तौ किं बीजं तत्राह—**इह चेति**। **परामर्शः**, स्मरणम्। अनुभवं विनैव भवतु परामर्श(स्तत्राह–) **अननुभव इति**। नन्वयं परामर्श एव न भवति, तत्तोल्लेखाभावादत आह—**अन्तःकरणेति**। एवं चान्तःकरणोपरागकालीनानुभवजन्यस्मरण एव तत्तोल्लेखो न स्मरणमात्र इति भावः। वस्तुतस्तु नैयायिकादिभिरपि प्रमुषित[1]तत्ताकस्मरणाङ्गीकारान्न केषामपि स्मरणे तत्तोल्लेखनियम इत्याह—**स्मरण इति**। **जाग्रद्दशायामिति**। सुषुप्त्यव्यवहितोत्तरक्षण इति शेषः। अन्यथा किञ्चित्कालानन्तरं जाग्रत्यप्यस्वाप्समिति प्रत्ययस्य नानुपपत्तिगन्धोऽपीति बोध्यम्। शब्दाद्यभावेऽप्यनुमानमस्तु तत्राह—**लिङ्गाभावेनेति**। ईदृशस्मरणविषयस्य हेतोराश्रयस्याहङ्कारस्य लिङ्गाभावेनेत्यर्थः। भवतु वा यथाकथंचिल्लिङ्गं तथापि हेतोराश्रयस्याहङ्कारस्य सुषुप्त्यव्यवहितक्षणेऽसिद्धेरित्याह—**आश्रयासिद्ध्या चेति**। सुषुप्तावहङ्कारस्य लीनत्वादिति भावः। तर्हि स्मरणे कथमहङ्कारभानं तत्राह—**अहङ्कारस्त्विति**। **तस्य**, अहङ्कारस्य। तर्हि अहमस्वाप्समिति सामानाधिकरण्यप्रतीतिः कथं तत्राह—**मुखप्रतिबिम्बाश्रय इति**। एवं च एकाश्रयसामानाधिकरण्यसम्बन्धेन यथा जातिः[2] सती समवायः सन्निति प्रत्ययः[3] यथा वा उक्तसम्बन्धेन मुखप्रतिबिम्बाश्रये दर्पणे लौहित्याध्यासेन रक्तं मुखमिति प्रत्ययस्तथा उत्थानसमये साक्षिचैतन्ये स्वापाहङ्कारयोः सामानाधिकरण्यात्प्रत्यय इत्यर्थः। **आश्रयतया**, सुखाश्रयतया। ननु, भवन्मतेऽहङ्कार एव ज्ञानाश्रयो न तु साक्षिचैतन्यं तत्राह—**स्मृतिसंशयेति**। तर्हि ज्ञानाश्रयो न अहङ्कारस्तत्राह—**अहङ्कारस्येति**। ननु नियामकाभावात्साङ्कर्यं स्यात्तत्राह—**प्रमात्वेनैवेत्यादि**। एवञ्चेदहङ्कारकालीनभ्रमात्मकशब्दानुमित्यादौ का गतिस्तत्राह—**अत एवेति**। एवमपि नामब्रह्मेत्युपासीतेत्यादौ का गतिस्तज्जन्याया नामनि ब्रह्मदृष्टेर्भ्रमत्वाभावादित्याह—**नामादिष्विति**। यद्यपि तस्याः प्रमात्वेऽपि न क्षतिः, अन्तःकरणवृत्तित्वात्तथापि वस्तुगतिमनुरुन्ध्य ज्ञानभिन्नत्वमुक्तमिति बोध्यम्। **तदुक्तमिति**। आचार्यैः शारीरकभाष्ये इति शेषः। **एतेनेति**। एतेन मानसज्ञानत्वं तर्कस्य प्रत्युक्तमित्यर्थः। **व्याप्यारोपेणेति**। तथा च नामनि ब्रह्मदृष्टिवितर्कोऽपि मनोवृत्तिविशेष एव न तु ज्ञानमित्यर्थः। **अत एवेति**। तर्कस्य ज्ञानविलक्षणमनोवृत्तिविशेषत्वादेवेत्यर्थः। श्रवणं त्वद्वितीये ब्रह्मणि निखिलवेदान्तानां तात्पर्यावधारणा-

१. खगयोः प्रमुष्ट इति।
२. गपुस्तके यथा ज्योतिरिति।
३. खपुस्तके यथा जातिः सती तर्हि समवायः सन्निति प्रत्यय इति।

नुकूलो व्यापारविशेषो न श्रोत्रजन्यं ज्ञानं, शब्दः श्रुत इत्यादिप्रत्ययसिद्धमिति। उक्तेऽर्थे हेतुमाह—**तस्येति**। वेदान्तविचारस्येत्यर्थः। एवं भाष्यकारैर्ज्ञानविधिरेव निराकृतो न तु श्रवणादिविधिरिति भावः। चतुर्विधान्वयव्यतिरेकं दर्शयति—**दृग्दृश्येत्यादि**। दृक्पदार्थस्त्वद्वितीयात्मस्वरूपप्रकाशविशुद्धानुभवमात्रः। दृश्यपदार्थस्त्वविद्यातत्कार्यपञ्चभूततदारब्धानि सर्वाण्यविद्यासम्बन्धश्च। दृश्यत्वं तु शब्दाजन्यवृत्तिविषयत्वं शब्दाजन्यान्तःकरणपरिणामरूपज्ञानविषयत्वं वा। न चाद्यस्य लक्षणस्य ब्रह्मण्यतिव्याप्तिः सुषुप्तिकालीनसुखाकाराविद्यावृत्तिविषयत्वादिति वाच्यं, विषयत्वरूपधर्मस्य लक्षणस्य निर्धर्मके ब्रह्मण्यभावात्। अविद्यावृत्तिविषयसंभावना तु स्वप्रात्मिकैव[1], अतो नातिव्याप्तिः। द्वितीये तु लक्षणेऽतिव्याप्तिसंभावनैव नास्ति, अविद्यावृत्तेरन्तःकरणपरिणामत्वासम्भवात्। नापि श्रवणादिजन्यान्तःकरणपरिणामरूपज्ञानविषयत्वादतिव्याप्तिः तदवस्थाश्रवणादिजन्याया वृत्तेर्ज्ञानभिन्नत्वस्य ग्रन्थकृद्भिरेवोक्तत्वात्। विषयत्वरूपधर्माभावाच्च नाद्यलक्षणेऽतिव्याप्तिः। यद्यपि दृश्यादिकाले दृगादिसत्वेनान्वयः सुमिलस्तथापि नित्यानां दृगादीनां व्यतीरेकाप्रसिद्ध्या अन्वयव्यतीरेकासिद्धेरयं ग्रन्थस्तर्कपरतया व्याख्येयः। उक्तं च गुरुचरणैः 'चतुर्विधान्वयव्यतिरेकादितर्करूपत्वात्' इत्यनेन ग्रन्थेन। तर्कश्च, दृक् यदि दृश्यभिन्नं न स्यात्तदा दृश्याभावकाले दृकालो न स्यादित्यादिरूपः। एवमुत्तरत्रापि बोध्यम्। परे तु दृश्यादिकाले दृगादिसत्त्वेनान्वयत्वेऽपि दृगादिव्यतिरेकाप्रसिद्धेर्न व्यतिरेके तात्पर्यम्, अपि तु अन्वये। एवमपि व्याप्तेर्भेदघटितत्वेन सिद्धो दृग्दृश्यादिभेद इति वदन्ति। नव्यास्तु सकृत्श्रुतपदस्यार्थद्वयक्लृप्तिर्न दुष्यतीति न्यायेन दृग्दृश्यान्वयशब्दो दृग्दृश्ययोः कालिकसामानाधिकरण्यमुक्त्वा अवशिष्टव्यतिरिक्तपदेनान्वितः सन् दृग्दृश्ययोरभावं तयोरभावयोर्व्याप्तिरूपस्यान्वयस्याभावं च वक्ति। तेन चायमर्थो लब्धः। यदा यदा दृश्यं तदा तदा दृगित्यादिव्याप्त्या दृश्यसम्बन्धिकालस्य दृक्सम्बन्धे लब्धेऽपि दृश्यस्य दृश्यसम्बन्धिकालान्वयत्वाभावाद्दृग्दृश्यभिन्नं दृग्दृश्ययोर्व्याप्तावपि तदभावयोर्व्याप्त्यभावादिति दृग्दृश्यान्वयव्यतिरेकशब्दस्यार्थं वर्णयन्ति। वस्तुतस्तु दृक् च दृश्यं च दृग्दृश्ये, अन्वयश्च व्यतिरेकश्च अन्वयव्यतिरेकौ। व्यतिरेकोऽपि सामान्याभावः, दृग्दृश्ययोरन्वयव्यतिरेकाभ्यामन्वयस्तु यथासङ्ख्येन, ततश्च दृगन्वयो दृश्यव्यतिरेकस्तत्सामान्याभाव इत्यर्थो लब्धः। तथा च यदा दृश्यसामान्याभावस्तदा दृगिति व्याप्तौ सिद्धायां क दृग्दृश्ययोरैक्यसम्भावना। एवं च सिद्धोऽहङ्कारादिभिन्न आत्मा। सिद्धे च भावरूपे आत्मनि शून्यवादोऽपि परास्त इति वदन्ति। एवं सिद्धेऽपि दृग्रूपे आत्मनि तस्य

१. स्वगयोरविद्यावृत्तिविषयता तु स्वप्रात्मिका एवेति।

जडत्वं न परिहृतं परप्रकाश्यत्वरूपजडत्वेऽपि तस्यानिर्वाहादत आह—**साक्षीति**। एवं चाविद्योपलक्षितचैतन्यरूपस्य साक्षिणः स्वपरप्रकाश्यत्वेन[1] स्वव्यवहारेऽन्यानपेक्षत्वरूपस्वप्रकाश्यत्वे सिद्धे क जडत्वसम्भावनेति भावः[2]। साक्ष्यं त्वविद्यादितत्सम्बन्धान्तं पूर्वोक्तं वेदितव्यम्। निरस्ते जडत्वे परिहृते च शून्यवादे विज्ञानवादो न निरस्तस्तथा चागतं क्षणिकत्वमात्मनोऽत आह—**आगमापायीति**। **आगमः**, उत्पत्तिः। **अपायः**, विनाशः। तथा च उत्पत्तेराकस्मिकत्वाभावेन[3] तस्य किञ्चित्पूर्वावधिभूतं कारणं वक्तव्यम्। एवं विनाशस्यापि प्रतियोग्यतिरिक्तं कारणं वक्तव्यम्। अन्यथोत्तरक्षणे विनाशापत्तेः। एवमपि तस्य कारणस्य जन्यत्वे तस्यापि कारणान्तरं तथा चानवस्था, अतस्तत्परिहारायानया रीत्या नित्यत्वं कारणस्य साध्यते। यदा आगमापायि ततः पूर्वमवधिभूतं ब्रह्म यदा चागमापायिसामान्याभावस्तदापि तदवधिभूतं ब्रह्म। एवं च कालपरिच्छेदशून्यत्वरूपमागतं नित्यत्वमात्मनः, तथा च न क्षणिकत्ववार्ता। अथवा क्षणिकत्ववादिनाऽपि नाशस्योत्तरावध्याश्रयभूतं किञ्चिद्वक्तव्यं निराश्रयनाशानुपपत्तेः, नाशपरम्पराकल्पने गौरवं च। अतो यदा आगमापायि तदा तदवधिभूतं ब्रह्म। यदा चागमापायिव्यतिरेकस्तदापि तदवधिभूतं ब्रह्मेत्यवधृतेरागतं कालपरिच्छेदशून्यत्वरूपं नित्यत्वमात्मन इति सर्वं निरवद्यम्। सर्वत्र चाभावोऽपि आत्मरूप एव, अतो न द्वैतापत्तिः। व्याप्तिग्रहस्तु यदा घटस्तदा कम्बुग्रीवादिमानितिवद्यदा दृश्यादिव्यतिरेकस्तदा दृगादीति। **एकस्यैव प्रकारभेदेनेति**। नन्वेतावता प्रबन्धेन नित्यानुभवस्वरूप एवात्मेति साङ्ख्यमतमेवोपपादितं न सुखस्वरूप आत्मेति तत्राह—**दुःखीति**। दुःखी अन्तःकरणावच्छिन्नं चैतन्यमहङ्कारो वा परमप्रेमास्पदं देशकालानवच्छिन्नं सुखं निरतिशयानन्दापरपर्यायः। एवं च यदा दुःखिव्यतिरेकस्तदापि परमप्रेमास्पदम्। अतः सिद्धं नित्यवत्वादात्मनः सुखस्वरूपत्वमिति। नन्वेवमपि परिच्छिन्नत्वेन विनाशित्वादिकमापतितमत आह—**अनुवृत्तेति**। **अनुवृत्तत्वं**, अनुगतत्वमत्यन्ताभावप्रतियोगित्वं वा। इदं तु ब्रह्मण एव न जडस्य। **व्यावृत्तत्वं**, अननुगतत्वमत्यन्ताभावप्रतियोगित्वं वा। इदं तु जडस्य न ब्रह्मणः। तथा च यदा व्यावृत्तव्यतिरेकस्तदानुवृत्तम्। अतः सिद्धमात्मनोऽपरिच्छिन्नत्वमतश्च सिद्धमात्मनोऽविनाशित्वादिकमिति दिक्। तर्हि किं वेदान्तशास्त्रे पञ्चैव तर्का, न, इत्याह—**एतच्चेति**। **अभियुक्ताः**, वेदान्तशास्त्रनिपुणाः।

---

१. खपुस्तके स्वपरप्रकाशकत्वेनेति।

२. गपुस्तके तस्य जडत्वं न परिहृतमित्यनन्तरं स्वप्रकाश्यत्वे सिद्धे क जडत्वसम्भावनेति भाव इति तन्न समञ्जसम्।

३. खगपुस्तकयोराकस्मिकत्वासम्भवेनेति।

तदेवं सुषुप्त्यवस्थायामस्त्यानन्दभोगस्तद्भोक्ता च सुषुप्त्यभिमानी प्राज्ञ इत्युच्यते। प्रकर्षेणाज्ञत्वात्तदानीं विशेषावच्छेदाभावेन प्रकृष्टज्ञत्वाद्वा। तदानीं चान्तःकरणस्य लयेऽपि तत्संस्कारेणावच्छेदान्न जीवाभावप्रसङ्गः, न वा सार्वज्ञापत्तिः। ईश्वराभेदप्रतिपादनं[1] च शरीरेन्द्रियाद्यभिमानरहितत्वेनोपचारात्। संस्कारस्य च निमित्तकारणत्वेन साक्ष्याश्रितकार्योपादानकोटावप्रवेशान्न तद्भेदेऽपि साक्षिभेदः। जागरणेत्वन्तःकरणस्य प्रमाश्रितकार्योपादानकोटौ प्रवेशात्तद्भेदेन प्रमातृभेद एव। साक्षिण एव चाधिकोपाधिविशिष्टस्य प्रमातृत्वान्न प्रतिसन्धानानुपपत्तिरिति।

मातृमानप्रभेदेऽपि प्रतिदेहं न भिद्यते।
साक्षी बाह्यार्थवद्यस्मात्स आत्मेत्युच्यते ततः॥
व्यभिचारो मिथो यद्वत्प्रमात्रादेः स्वसाक्षिकः।
सर्वमात्राद्यभावार्थसाक्षित्वान्न तथात्मनः॥

(बृ. आ. भा. वा. ३।४।९४-९५)

इति वार्तिककारपादैर्व्यवहारदशायामपि साक्षिभेदनिराकरणात् सुषुप्तौ तद्भेदकल्पनं केषाञ्चिद्व्यामोहमात्रमित्यवधेयम्।

प्रासङ्गिकं समाप्य प्रकृतमनुसरति—**तदेवमिति**। 'आनन्दभुक् चेतोमुखः प्राज्ञ' इत्यादिश्रुत्यवष्टम्भेन भोगं भोक्तारं च प्रतिपाद्य प्राज्ञशब्दस्य योगार्थमाह— **प्रकर्षेणेति**। सकलविशेषावच्छेदकाभावे जीवोपाधेरन्तःकरणस्याप्यभावेन जीवनाशः। ईश्वराभेदेन ईश्वरवत् सुषुप्तस्य सार्वज्ञं च स्यादिति शङ्कामपनुदति— **तदानीं चेति**। तर्हि 'सता सोम्य तदा सम्पन्नो भवति' इत्यादिश्रुतेः का गतिरत आह—**ईश्वराभेदेति**। एकाविद्या तत्प्रतिबिम्ब एको जीवः, बिम्बमीश्वरः, स एव जीवो वृत्तिमदन्तःकरणविशिष्टः[2], प्रमाताऽन्तःकरणोपहितः, साक्षी अन्तःकरणस्य। साक्षिकोटौ च प्रवेशे एकप्रमातृसुखादिकं सकलप्रमातृवेद्यं स्यात्, एकस्य भासकस्य प्रतिबिम्बचैतन्यस्य सर्वत्राप्यविशिष्टत्वात्[3]। एवं चान्तःकरणस्य विशेषणत्वोपहितत्वाभ्यां द्वेधा प्रवेश इति केषाञ्चिन्मतं दूषयति—**संस्कारस्य चेति**। **साक्ष्येति**। साक्ष्याश्रितं यत्कार्यं स्मरणादिस्तदुपादानं तत्कोटावित्यर्थः। संस्कारापे-

---

१. तस्मिन्नेव ईश्वरभेदप्रतिपादनमिति पाठः स न समीचीनः।
२. खपुस्तकेऽन्तःकरणविशिष्ट इति।
३. खगपुस्तकयोः सर्वान्प्रत्यविशिष्टत्वादिति।

क्षया प्रमातुरुपाधेरन्तःकरणस्य वैलक्षण्यं प्रदर्शयन्प्रमातृभेदमुपपादयति—**जागरणे त्विति**। ननु, प्रमातॄणामनुभवाश्रयाणां यथा परस्परं भेदस्तथा स्मर्तुः साक्षिणोऽपि भेदः प्रमातृनिष्ठस्तथा चानुभवस्मरणयोर्वैयधिकरण्यान्न साक्षिणः स्मरणमत आह—**साक्षिण एवेति (?साक्षिण इति)**। **प्रतिसन्धानं**, स्मरणम्। वस्तुतस्तु प्रमातुरुपाधेरन्तःकरणस्य साक्ष्युपाधित्वानङ्गीकारे सकलभासकात्साक्षिणः भिन्नः प्रमाता, तथा च कथं प्रमात्राश्रितकार्यभानं भासकासन्निकृष्टत्वात्तदसन्निकृष्टभासने चातिप्रसङ्गा[1]दत आह—**साक्षिण एवेति**। न चैवमपि प्रमातुः स्वप्रपञ्चसाक्षात्कार इव प्रमात्रन्तरप्रपञ्चस्यापि साक्षात्कारः स्यात् प्रमात्रभिन्नसाक्षिणो भासकत्वादिति वाच्यम्[2], यत्प्रमात्रन्तःकरणे साक्षिप्रतिबिम्बं तस्यैव भाननियमेन सर्वसामञ्जस्यात्। प्रमात्रभिन्नसाक्षिणो भासकत्वादित्युक्तेऽर्थे वार्तिककारसम्मतिमाह—**मातृमानेत्यादिना**। देहभेदेन प्रमातृप्रमाणयोर्भेदेऽपि बाह्यार्थो घटादिर्यथा न भिद्यते तथा साक्ष्यपि न भिद्यते, ततस्तस्मात्कारणात् साक्षी ते तव आत्मा इत्यर्थः। व्यतिरेके दृष्टान्तमाह—**व्यभिचार इति**। यथा परस्परं प्रमातृप्रमाणप्रमेयाणां भेदः स्वसाक्षिकः अज्ञानावच्छिन्नचैतन्यसाक्षिक इत्यर्थः। दृष्टान्तं प्रतिपाद्य दार्ष्टान्तिकमाह—**न तथात्मन इति**। तथात्मनः साक्षिणो भेदो नास्तीत्यर्थः। अस्यां प्रतिज्ञायां हेतुमाह—**सर्वेति**। सकलप्रमाणप्रमात्रादीनां तेषामभावानां च साक्षित्वादित्यर्थः। **सुषुप्ताविति**। सुषुप्तावपीत्यर्थः। जागरणे साक्षिभेदाभावे कुतः सुषुप्तौ साक्षिभेद इत्यन्वयः।

**ननु, दुःखमहमस्वाप्समिति कस्यचित्कदाचित्परामर्शात्सुषुप्तौ दुःखानुभवोऽप्यस्तु। न, तदानीं दुःखसामग्रीविरहेण तदभावात्। सुखस्य चात्मस्वरूपत्वेन नित्यत्वात् शय्यादेरसमीचीनत्वे च दुःखमित्युपचारात् दुःखमहमस्वाप्समिति प्रत्ययोपपत्तिः। अथवा अवस्थात्रयस्यापि त्रैविध्याङ्गीकारात्सुषुप्तावपि दुःखमुपपद्यते। तथा हि प्रमाज्ञानं जाग्रज्जाग्रत्, शुक्तिरजतादिविभ्रमो जाग्रत्स्वप्नः, श्रमादिना स्तब्धीभावो[3] जाग्रत्सुषुप्तिः। एवं स्वप्ने मन्त्रादिप्राप्तिः स्वप्नजाग्रत्, स्वप्नेऽपि स्वप्नो मया दृष्ट इति बुद्धिः स्वप्नस्वप्नः, जाग्रद्दशायां कथयितुं न शक्यते स्वप्नावस्थायां च यत्किञ्चिदनुभूयते तत्स्वप्नसुषुप्तिः। एवं**

१. क१पुस्तके भासकासन्निकृष्टभासनेचातिप्रसङ्गादिति, गपुस्तके च भासकासन्निकृष्टत्वात्तदभासने चातिप्रसङ्गादिति पाठः।

२. क१पुस्तके भासकमित्येकत्वादिति वाच्यमिति पाठः स नास्मिन्सन्दर्भे युक्तः।

३. कपुस्तके तल्लीनभाव इति पाठः स न समीचीनः।

सुषुप्त्यवस्थायामपि सात्विकी या सुखाकारा वृत्तिः सा सुषुप्ति-जाग्रत्, तदनन्तरं सुखमहमस्वाप्समिति परामर्शः; तत्रैव या राजसी वृत्तिः सा सुषुप्तिस्वप्नः, तदनन्तरमेव दुःखमहमस्वाप्स-मिति परामर्शोपपत्तिः; तत्रैव या तामसी वृत्तिः सा सुषुप्तिः, तदनन्तरं गाढं मूढोऽहमासमिति परामर्शः । यथा चैतत्तथा वासि-ष्ठवार्तिकामृतादौ स्पष्टम् ।

सुखमहमस्वाप्समिति परामर्शाद्यथा सुषुप्तौ सुखानुभवस्तथा दुःखानुभवोप्यस्त्वि-त्याशङ्कते—**नन्विति** । परिहरति—**न इति** । हेतुमाह—**तदानीमिति** । ननु, तदानीं दुःखाभावेन तदनुभवाभावात्कथं दुःखपरामर्शस्तत्राह—**शय्यादेरिति** । वस्तुतो दुःखाभावेऽपि दुःखोपचारात्तत्परामर्श इत्यर्थः । उपचारमसहमानो वार्ति-कोक्तरीत्या समाधातुं षष्ठाध्यायान्तर्गतज्योतिर्ब्राह्मणस्थमर्थमाह—**अथवेति** । अ-वस्थात्रैविध्यं वक्तुं प्रथमतः जाग्रदवस्थाकालीनान्तर्गतां जाग्रदवस्थामाह—**प्रमा-ज्ञानमिति** । क्रमप्राप्तां स्वप्नान्तर्गतां जाग्रदवस्थामाह—**एवमिति** । क्रमप्राप्तां सुषुप्त्यन्तर्गतां जाग्रदवस्थामाह—**एवं सुषुप्ताविति** । इदमर्थं प्रमाणीकर्तुमाह—**यथा चैतदिति** ।

एवमध्यात्मं विश्वः, अधिभूतं विराट्, अधिदैवं विष्णुः; अध्यात्मं जाग्रत्, अधिदैवं पालनं, अधिभूतं सत्त्वगुणः । एवमध्यात्मं तैजसः, अधिभूतं हिरण्यगर्भः, अधिदैवं ब्रह्मा; अध्यात्मं स्वप्नः, अधिदैवं सृष्टिः, अधिभूतं रजोगुणः । एवमध्यात्मं प्राज्ञः, अधिभूतमव्या-कृतं, अधिदैवं रुद्रः; अध्यात्मं सुषुप्तिः, अधिदैवं प्रलयः, अधिभूतं तमोगुणः । एवमध्यात्माधिभूताधिदेवानामेकत्वात्प्रणवावयवत्रय-सहितानामेतेषामुपहितानामैक्योपासनया हिरण्यगर्भलोकप्राप्तिः, अन्तःकरणशुद्धिद्वारा क्रममुक्तिश्च । एतत्सर्वोपाधिनिराकरणेन सा-क्षिचैतन्यमात्रज्ञानेन तु साक्षादेव मोक्ष इति । तदेवं त्रयाणामप्यव-स्थात्रयसहितानां विश्वतैजसप्राज्ञानामविद्यात्मकत्वात् दृश्यत्वेन च मिथ्यात्वादनुपहितः केवलः साक्षी तुरीयाख्योऽहमस्मीत्यर्थः । एवं व्यवहारतः सर्वव्यवस्थोपपत्तेः परमार्थतः कस्या अप्यवस्थाया अभावान्न काप्यनुपपत्तिः । विस्तरेण चैतत्प्रपञ्चितमस्माभिर्वेदान्त-कल्पलतिकायामित्युपरम्यते ॥ ८ ॥

प्रसङ्गादन्तःकरणशुद्ध्यर्थं वार्तिकाद्युक्तामुपासनामाह—**एवमध्यात्ममिति** ।

क्रममुक्त्युपायमुक्त्वा साक्षान्मुक्त्युपायमाह—एतत्सर्वोपाधीति। अविद्यात्मकत्वादित्यादि द्वितीयार्धस्यार्धं वदन्नुपसंहरति—तदेवं त्रयाणामिति। इत्यष्टमः श्लोकः।

ननु, जाग्रत्स्वप्नसुषुप्त्यवस्थासहितानां त्रयाणामपि तदभिमानिनां मिथ्यात्वात्, तत्साक्षिणोऽपि मिथ्यात्वं स्यात्, अविशेषात्, इत्याशङ्क्य विशेषाभिधानेन साक्षिणः सत्यत्वमाह—

अपि व्यापकत्वाद्धितत्वप्रयोगात्
स्वतः सिद्धभावादनन्याश्रयत्वात्।
जगत्तुच्छमेतत्समस्तं तदन्यत्
तदेकोऽवशिष्टः शिवः केवलोऽहम्॥ ९॥

'न दृष्टेर्द्रष्टारं पश्येः' (बृ. आ. ३।४।२) इति साक्षिणं प्रकृत्य 'अतोऽन्यदार्तम्' (सैव) इति श्रुतेः साक्षिणोऽन्यत्साक्ष्यं सर्वं जगत्तुच्छं, न तु साक्षी। बाधावधित्वात्भ्रमाधिष्ठानतया ज्ञातत्वाच्च, तद्बाधग्राहकाभावाच्चेत्याद्यनुक्तसमुच्चयार्थः अपिशब्दः। 'अथ यदल्पं तन्मर्त्यम्' (छां. ७।२४।१) इति श्रुतेः परिच्छिन्नत्वतुच्छत्वयोः समव्याप्तत्वात्परिच्छिन्नत्वनिवृत्त्या तुच्छत्वनिवृत्तिरित्याह—व्यापकत्वादिति। 'सर्वं खल्विदं ब्रह्म' (छां. ३।१४।१) इति सर्वात्मत्वोपदेशेन देशकालापरिच्छिन्नत्वात्, आकाशादीनां च देशकालापरिच्छिन्नत्वेऽप्यापेक्षिकमहत्त्वेन व्यापकत्वोपचारात्। ननु, सर्वव्यापकत्वेन नित्यत्वाद्भावरूपत्वाच्चात्मा न दुःखनिवृत्तिरूपः, नापि सुखरूपः, सुखस्यानित्यत्वेन नित्यात्मरूपत्वानुपपत्तेः, तथा चात्मस्वरूपो मोक्षोऽपुरुषार्थ एवेत्याशङ्क्य, न, इत्याह—हितत्वप्रयोगादिति। हितत्वं, पुरुषार्थत्वम्। 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मेति' (बृ. आ. १।४।८), 'यो वै भूमा तत्सुखं' (छां. ७।२३।१), 'एष एव परम आनन्दः' (बृ. आ. ४।३।३३), 'विज्ञानमानन्दं ब्रह्म' (बृ. आ. ३।९।२८) इत्यादि श्रुतिभ्यस्तस्य परमानन्दरूपत्वोपदेशात्। तस्य च नित्यत्वेऽपि लोके धर्मजन्यततदन्तःकरणवृत्तिव्यङ्ग्यतया तदुत्पत्तिविनाशोपचारः। अज्ञानव्यवहितस्य च तस्याप्राप्तस्येव ज्ञानमात्राद्विद्यानिवृत्त्या प्राप्तिरिव भवतीति तदुद्देशेन मुमुक्षुप्रवृत्त्युपपत्तिः। अध्यस्तस्य प्रपञ्चस्य दुःख-

